| | | |
|---|---|---|
| ग्रन्थस्य नामः | : | उपनिषत्कारिका |
| लेखकः | : | शरत्कुमार भट्टराई |
| सर्वाधिकारः | : | © लेखकाधीन |
| प्रकाशकः | : | श्रीराजर्षिजनकस्मृतिकोषस्तथा जयतुसंस्कृतञ्च । |
| प्रकाशनमितिः | : | वि.सं. २०७८ |
| प्रकाशितसङ्ख्या | : | ३०० |
| मूल्यम् | : | रु. ४००।– |
| कम्प्युटर सेटिङ्ग | : | श्रीखड्गप्रसाद खनालः |
| मुद्रकः | : | एलायन्स प्रिन्टर्स एण्ड मिडिया हाउस प्रा.लि. |
| ISBN | : | 978-9937-1-1381-6 |

# प्रकाशकीयम्

पौरस्त्यचिन्तने ह्यार्षपरम्परायामनेकानि उपनिषद्ग्रन्थरत्नानि विश्वप्रसिद्धानि सन्ति । तानि च ग्रन्थरत्नानि वेदानां कर्मोपासनाज्ञानकाण्डेषु ज्ञानकाण्डदीपं द्योतयन्ति । वेदानां संहिताब्राह्मणारण्यकोपनिषद्भागा विद्वद्धौरेयैर्ज्ञायत एव सुतराम् । वेदस्यान्तिमो भाग उपनिषन्नाम्ना वेदान्तनाम्ना वा ख्यातोऽस्तीति सुरभारतीसमुपासकाः सम्यगनुभवन्त्येव । अध्यात्मविद्यारहस्य-प्रतिपादका वेदभागा उपनिषन्नाम्ना गीयन्ते ।

अनेकासूपनिषत्सु एकादशोपनिषदः प्रसिद्धाः सन्ति– ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-छान्दोग्य-तैत्तिरीयैतरेय-श्वेताश्वर-बृहदारण्यकोपनिषदः । एताश्च उपनिषद्ग्रन्थाः पद्यभाषया गद्यभाषया गद्यपद्ययोर्मिश्रितशैल्या च निबद्धा दरीदृश्यन्ते । एतासामेवोपनिषदां सारं सन्दुह्य कारिकाग्रन्थोऽयं विरचितोऽस्ति । ज्ञान-भक्तिपरकेषु आध्यात्मिकविषयेषु तत्र च विशेषतोऽद्वैतवेदान्तस्य गूढतमविषयेषु विरचिता ग्रन्था अमुना कोषेण स्वकीयस्रोतःसाधनोपयोगेन यथाशक्ति प्रकाश्यमाना एव सन्ति । एवमष्टसप्तत्यधिकद्विसहस्रतमेऽस्मिन् संवत्सरेऽपि शरत्कुमार-भट्टराईवर्येण विरचिताया गुरुशिष्यसंवादा-त्मिकाया उपनिषत्कारिकायाः प्रकाशनावसरं प्राप्य अयं कोषस्तथा जयतुसंस्कृतम् नेपाल हर्षप्रकर्षमनुभवतः ।

ग्रन्थेऽस्मिन्नद्वैतवेदान्तस्य परमसिद्धान्ताः समासेन समुल्लिखिताः सन्ति । अमुष्या जिज्ञासवो मुमुक्षवः साहज्येन लाभं ग्रहीष्यन्तीति कोषोऽयमाशास्ते । कोषस्यास्य संस्थापकः, सञ्चालकः, व्यवस्थापकः, परिचालकश्च समादरणीयः शरत्कुमार-

भट्टराईवर्योऽद्वैतवेदान्तस्यानवरतमध्येता, अन्वेषकः, चिन्तकः, वेदान्तविषयकाणाम् उत्तमग्रन्थानां प्रणेता, लेखकश्च वर्तते । अस्य धर्मपत्न्या श्रीमत्या इन्दिरा-भट्टराईवर्यया सहैव गतस्य वैशाखमासस्य त्रयोदशदिनाङ्कादयं सहस्रचन्द्रदर्शनपूर्वकं जीवनस्य चतुरशीतितमं संवत्सरं प्राविशत् । अतोऽस्मिन्नुपलक्ष्य आदर्शमयं गार्हस्थ्यं यापयतोरनयोर्निरामयम्, आनन्दमयञ्च चिरजीवनं कामयामहे ।

विदुषा शरत्कुमारवर्येण विरचितस्योपनिषत्कारिकाग्रन्थस्य सुरगिरानुवादेन संस्कृत-वाङ्मय-भाण्डागारेऽस्य प्रविष्टिसम्पादकाय संस्कृतविदुषे डा. लक्ष्मीकान्तवर्याय कोषोऽयं हार्दान् साधुवादान् वितरति । अस्यौपनिषद्ग्रन्थरत्नस्य संस्कृतसंस्करणस्यास्य प्रकाशनाय सहप्रकाशकत्वं स्वीकुर्वाणा 'जयतु संस्कृतम्' इति संस्था च धन्यवादार्हा वर्तते । सा चेयं 'जयतु संस्कृतम्' इति संस्था संस्कृतवाङ्मयस्य संरक्षणाय संवर्धनाय च प्रतिबद्धास्ति । संस्थातो-ऽनेकानि ग्रन्थरत्नानि प्रकाशितानि च । अनया संस्थया पौरस्त्यदार्शनिकग्रन्थानां नेपालीभाषयानुवादप्रकाशनादिपरियोजना च सञ्चलितास्ति ।

ग्रन्थस्यास्य रचनाकारः शरत्कुमारभट्टराईमहोदयो जयतु संस्कृतमिति संस्थायाः संस्थापक उपाध्यक्षश्चासीत् । अनेन प्रवृत्तिमार्गमनुसरता नेपालसर्वकारस्य सचिवादिपदेषु स्थित्वा ह्यनेकानि कार्याणि सम्पादितानि । निवृत्तिमार्गे सोऽयं मुमुक्षुषष्टिवर्षेभ्यो ब्रह्मविद्यां समुपासयन् स्वात्मानम्, स्वकुलम्, स्वदेशञ्च धन्यमकरोत् । मूलतो ब्रह्मविद्यायाम्, अन्येषु विविधेषु विषयक्षेत्रेषु च पञ्चाशदधिकानि ग्रन्थरत्नानि अनेन लिखितानि सन्ति । तस्यैवाभ्यासे उपनिषत्कारिका-ग्रन्थोऽयं विरचितः ।

शरत्कुमारभट्टराईमहोदयस्यानेकेषु दार्शनिकग्रन्थेषु पद्यात्मकप्रस्तुत्या पुरस्कृतोऽयं ग्रन्थः संस्कृतवाङ्मयस्य महत्तमं रत्नं भविष्यति। नेपालिनां कृते विश्वदार्शनिकसमुदायस्य कृते चायं ग्रन्थः पठनीयोऽस्ति, सेवनीयोऽस्ति । लेखनेऽनुवादकार्ये, ग्रन्थसम्पादने, प्रकाशने च ये महानुभावाः संलग्नास्ते सर्वे धन्यवादार्हाः । ॐ ब्रह्मार्पणमस्तु ।

२०७८ वैशाखः १३

श्रीराजर्षिजनकस्मृतिकोषः
तथा
जयतुसंस्कृतम्, नेपालः

# शुभाशंसा

ब्रह्माद्वैतसिद्धान्तस्य द्विविधा गुरुपरम्परा समुपलभ्यते । एका नारायणसमारम्भा जगत्स्रष्टारं ब्रह्माणं कृतार्थयन्ती तन्माध्यमेनैव मनुष्यलोकं सम्प्राप्ता चेद् अपरा दक्षिणामूर्ति-शिवसमारम्भा सनकादिकृतार्थकारिणी गोपनीया च । प्रथमसम्प्रदाये भगवता नारायणेन ब्रह्माणं प्रति वाण्या एव वेदान्तरहस्यं समुपदिष्टम्, यस्य सङ्क्षेपेणोल्लेखः चतुःश्लोकिभागवते प्राप्यते । वेदान्तदर्शननाम्ना विविधानां विदुषामन्येऽपि सिद्धान्ताः सन्ति प्रसिद्धाः परं यथा ब्रह्माद्वैतसम्प्रदायस्य मूलं स्वरूपं प्रामाणिकरूपेणोपलभ्यते न तथा अन्येषां सम्प्रदायानां तत्सिद्धान्तानां वा मूलं प्रामाणिकञ्च स्वरूपमुपलभ्यते । अद्वैतवेदान्तसिद्धान्तमेव मनसिकृत्य तत्प्रवर्त-कत्वेन योगेश्वरः श्रीकृष्णः आत्ममहिमानमगायत – वेदान्तकृद् वेदविदेव चाहम् (१५/१५) । अस्यां परम्परायां वाण्या एव ब्रह्मोपदेशो विधीयते । यद्यपि सर्वसंसारधर्मरहिते ब्रह्मणि वाण्या मनसश्च प्रवेशो नास्ति, तथापि तत्त्वज्ञस्य गुरोरिदमेव विचित्रं वैशिष्ट्यं यत्शब्दातीतमपि तत्त्वं शब्देन बोधयति । अत एवोपनिषत्सु तत्त्वज्ञानी गुरुराश्चर्यमयो भवतीति प्रतिपादितम् आश्चर्यो वक्ता कुशलोऽस्य श्रोता (कठोपनिषद् १/२/७) इत्यादिना । शब्दावेद्यस्य शब्दमाध्यमेन बोधनं कथमिति चेत् ? निषेधमुखशैलीरूपकौशलेन इति विभावनीयम् । नेति नेतीत्यादिशब्दैः ब्रह्मभिन्नानां देहेन्द्रियादिवस्तूनां निषेधानन्तरं निषेधावधित्वेन स्वप्रकाशं ब्रह्म स्वतः परिस्फुरतीति शब्दप्रयोगस्य सार्थक्यम् । इत्थं शिष्यजिज्ञासां श्रुत्वा तत्प्रशमनाय गुरुणा वेदान्तोपदेशो विधीयते इति नारायणी वेदान्तपरम्परा

प्रसिद्धा वर्तते।

दक्षिणामूर्तिपरम्परा तु इतोऽपि रहस्यपूर्णा वर्तते। पूर्णतः शुद्धचित्तानां सनकादीनां पुरतः दक्षिणामूर्तिरूपेण प्रादुर्भूतः शिवः मौनव्याख्यया एव तेषां संशयं चिच्छेद इति शास्त्रेषु श्रूयते। तत्त्वसाक्षात्कारानन्तरं यदा ब्रह्माकारवृत्तिरपि बाधिता भवति, तदा या वृत्तिरहिता स्वरूपस्थितिर्भवति सा एव दक्षिणामूर्तेः सहजा स्थितिर्वर्तते। तादृशानां तत्त्वनिष्ठानां सत्सन्निधाने विषयिणामपि जनानां वृत्तिरन्तर्गामिनी भवति चेत् का कथा शमादिसाधनसम्पन्नानां ब्रह्मान्वेषणपरायणानां जनानाम्? वृत्तिरहितब्रह्मस्थितौवस्थितानां ब्रह्मविद्वरिष्ठानां सान्निध्येन निदिध्यासननिरतानां जिज्ञासूनां चेतसि तादृशं सामर्थ्यमभिव्यज्यते येन चित्तं चरमाकारवृत्तौ परिणमते। एवं चरमकृपाप्रदायकत्वात् दक्षिणामूर्तिः सर्वोत्कृष्टगुरुरूपेण संस्तूयते शास्त्रेषु। यथाहुः सुरेश्वराचार्याः गुरूणाङ्गुरवे नमः (दक्षिणामूर्ति-स्तोत्रम्, मानसोल्लासवार्तिकम्)।

इत्थं वेदान्तस्य द्विविधसम्प्रदायमध्ये भगवत्पादाः श्रीशङ्कराचार्या द्विविधेनैव सम्प्रदायेन सह सम्बद्धाः सन्ति। अद्यत्वे च सनकादिसदृशानां निर्वासनानां जिज्ञासूनामभावात् वेदान्तस्य मौनव्याख्यापरम्परा प्रतिरुद्धा इव भाति। शास्त्राद्युपदेशमाध्यमेन ब्रह्मविचारस्य नारायणीपरम्परा एव प्रसृता विद्यते। अस्यां परम्परायां शास्त्रतात्पर्यानुसन्धानादिभिनिरन्तरं ब्रह्माभ्यासं कुर्वते जिज्ञासवः। अमुमेवं मार्गमाश्रित्य अद्यत्वेऽपि शास्त्राध्ययनमननादिषु अनेके स्वाध्यायशीलाः सत्पुरुषाः प्रवृत्ताः सन्ति। तन्मध्ये प्रस्तुतग्रन्थकर्तारः शरत्कुमारभट्टराईमहाभागा अपि अद्वैतवेदान्तचिन्तनानुरक्तः वेदान्ततत्त्वविविदिषवो वर्तन्ते। ब्रह्मलीनगुरुवर्याणां सतीर्थ्या एते गुरुवर्याणां संस्कृतविद्यासंरक्षण-यज्ञस्यापि सञ्चालनसहयोगिनः सन्ति। उत्तरे वयसि वेदान्तविचारायैव

स्वजीवनं समर्पितवद्भिरेतैरुपनिषत्कारिका इति नाम्ना उपनिषदां तात्पर्यस्य मातृभाषाश्लोकेषु गुम्फनं विहितम् । तस्यैव ग्रन्थस्य देववाण्यां समच्छन्दसि अनुवादो विद्वद्भिः डा. लक्ष्मीकान्तमहाभागैः विहित इति निरतिशयं प्रसीदति मे चेतः । अन्ते च सर्वविद्याप्रवर्तकं राष्ट्रदेवं श्रीपशुपतिं प्रार्थये यत् – ग्रन्थकर्तुरनुवादकस्य च सर्वं जीवनं ब्रह्मविचारमयं संस्कृतसेवामयञ्च स्यात्, तथैव ग्रन्थाध्ययनेन जिज्ञासवो ब्रह्माभ्यासदार्ढ्ये प्रयतमाना भवेयुरिति शम् ॥

स्वामिरमणानन्दगिरिः
पीठाधीशः
महेश–संन्यासाश्रमः
देवघट्टधाम

# कारिकायां दर्शनदृष्टिः

वैदिककालीनानां मन्त्रद्रष्टॄणामृषीणामाध्यात्मिकेन चिन्तनेन परिलसितेयमुपनिषद् विपुलप्रयोजनवद्दार्शनिकं भाण्डागारमस्ति । सृष्टेरुषाकालत ऋषिभिः स्वजीवनस्य महत्त्वपूर्णकालस्य प्रयोगेण तथ्यमिदं प्रकाशितं यद् आपातरमणीयेऽस्मिन् प्राकृतिके दृश्यप्रपञ्चे एका सनातनसत्ता विद्यते, तस्याः खलु अवाङ्मनसगोचरसत्ताया अनुसन्धानं मानवानां परमं कर्तव्यमस्तीति ।

सर्वेषु सर्वत्र सदा बोधरूपेण विद्यमानापि स्वाभ्यन्तरस्था सा सदातनी सत्ता अनाद्यविद्ययावृततया नास्तीव प्रतीयते । अत एव वेदान्तवेद्यस्य शुद्धस्य बुद्धस्य मुक्तस्य च द्रष्टव्यस्यात्मनः श्रवणमननादिं विनात्मैकत्वविद्याप्रतिपत्तेरसम्भवाद् उपनिषद्विद्या प्रारब्धा वर्तते ।

उपनिषत्पदघटितानां प्रकृति-प्रत्यय-निपातानामर्थानुसन्धाने-नोपनिषदो मुख्यार्थो ब्रह्मविद्या, गौणार्थश्च उपनिषद्ग्रन्थ इति सिध्यति। यथा 'उप' 'नि' चेति उपसर्गपूर्वकात् षद्लृधातोः क्विप्प्रत्यये-नोपनिषच्छब्दो निष्पद्यते । षद्लृधातोः त्रयोऽर्थाः सन्ति– विशरणम्, गतिः, अवसादनञ्च। यस्य ग्रन्थस्याभ्यासेनाध्येतुर्जन्ममरणादिसंसार-बीजभूताया अनाद्यविद्याया विशरणं विनशनं वा भवति, ब्रह्मगतिः प्राप्यते, सांसारिकीण वासनानामवसादनं शैथिल्यसम्पादनञ्च भवति, तस्या हि नाम उपनिषद् । अयं ग्रन्थपरकोऽर्थः ।

विद्यापरकमर्थं प्रकाशयन् भगवत्पादशङ्कराचार्यो वदति– 'उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते ।' उपनिषद्व्याख्याता ग्रन्थप्रतिपाद्या ब्रह्मविषयिणी विद्यैवोपनिषद् । अर्थस्यास्येतोऽपि स्पष्टीकरणं मिताक्षराटीकायामेवं

प्राप्यते– अत्र खलु 'उप'-उपसर्गेण सामीप्यं बोधयति, सामीप्यञ्च जीवब्रह्मणोरभेदरूपं विवक्षितम्, 'नि'-शब्दो निश्चयार्थकः । एवंरीत्या विचारिते सति ब्रह्मविद्यैवोपनिषदिति तथ्यं प्रमाणीकृतं भवति ।

'अनुभवावसाना हि ब्रह्मविद्या' इति सिद्धान्तमात्मसात्कृतवता वरिष्ठेन साहित्यस्रष्ट्रा दार्शनिकेन विदुषा श्रीशरत्कुमारभट्टराईवर्येण स्वराष्ट्रभाषायां विरचितायामस्यां गुरुशिष्य-संवादात्मिकायामुपनिषत्कारिकायामुपनिषदां दुरवगाह्या दुर्वेद्याश्च विषयाः छन्दोबद्धतया समुपस्थापिताः सन्ति । यथा–

शिष्यः –

आत्माऽनात्माऽनयोर्भेदं श्रुतं गुरुमुखादिह ।
कर्तृत्वादिकमज्ञानं न जहाति मनो मम ॥४२०॥
कर्माशयं तथाऽज्ञानं वासनाः सन्ति चात्मनि ।
देहेऽभिमाने जीवेऽस्मिन् कथं नश्यन्ति मां वद ॥४२१॥

गुरुः –

अनादिवासना सैषा संसारे सारयत्यहो ।
कर्तृत्वाद्या अहङ्कारा उद्यन्ति यत एव हि ॥४२२॥
अन्तर्मुखस्त्वं स्वां बुद्धिं निर्भयां कुरु निर्मलाम् ।
वसे स्वात्मस्वरूपे चेद् वासना यान्ति संक्षयम् ॥४२३॥

एवमेवोपनिषदन्तर्गतानां संवर्गविद्या-भूमाविद्यापञ्चाग्निविद्यानां तथैव देवयान-पितृयानादीनां दुष्प्रवेश्यविषयाणामपि सुबोधकवित्वशैल्या सज्जीकृत्य प्रस्तवनमत्र कृतमस्ति । असौ पञ्चाग्निविद्यारहस्यमित्थं समुद्घाटयति–

शिष्यः –

विहाय चाऽन्याऽऽश्रमिणो गृहस्थानां कृते किमु ?
पक्षपातः कृतः श्रुत्या विधानं हीदृशं किमु ? ॥२६२॥

गुरुः –

काम्यं कर्मैषणायुक्तं प्रकरोति गृहाश्रमी ।
पुत्रदाराधनासक्तः प्रपञ्चे रमते गृही ॥२६४॥
रागद्वेषादिभिः सार्धं धर्मा-धर्मादिकर्मकृत् ।
अन्तःकरणभाण्डं स्वं भरतीह शुभाऽशुभैः ॥२६५॥
हिंसाऽनृतं च कापट्यमसूया लोभमत्सरौ ।
गृहस्थेषु भवन्तीह दुर्गुणा लघवोऽधिकाः ॥२६६॥
वैराग्यं त्वल्पमात्रं स्याद् गृहस्थजनमानसे ।
वैराग्यार्थमिमां विद्यां श्रद्धाविश्वासतः शृणु ॥२६७॥
विद्यामिमां संशृणोतु महावाक्यैर्भवानपि ।
अन्यथा न भवेन्मुक्तिर्गृहस्थानां तु का कथा ॥२६८॥

एवं रूपस्याऽस्यग्रन्थस्य नेपालीभाषया विरचितायाः कारिकायाः यथारूपेण सरलजनसंवेद्यसंस्कृतभाषाया डा. लक्ष्मीकान्तेनपन्थिना-नुवादोऽपि विहितः ।

एवञ्चान्येऽप्यनुसन्धेया महत्त्वपूर्णा विषया ग्रन्थेऽस्मिन् ग्रथिताः सन्ति । अतोऽद्वैतवेदान्तस्य महता समुपासकेन समादरणीयेन विदुषा श्रीशरत्कुमार-भट्टराईवर्येण प्रणीतोऽयं कारिकाग्रन्थ उपनिषत्प्रतिपाद्यं विषयं बुभुत्सूनां साधकानां पाठकानां प्राध्यापकाना-मध्येतृणा-मनुसन्धातृणाञ्च कृतेऽत्यन्तमुपयोगी भविष्यतीति मन्ये ।

अद्वैतवेदान्तपरम्पराया जिज्ञासूनां मुमुक्षूणां कृतेऽस्पष्टतापन्नेषु अविद्यालेशः, अर्चिरादिमार्गः, महावाक्यम्, मुक्तिप्रकाराः, आतिवाहिकसदृशेषु च विषयेषु कारिकाकर्तुर्लेखनी सञ्चरेदिति च शुभेच्छामभिव्यनज्मि । अस्तु परिपूर्णम् ॥

प्रा.भवानीप्रसाद-खतिवडा

# सम्मतिः

नित्यानन्दाय शान्ताय ब्रह्मणेऽनन्तशक्तये ।
ज्ञानरूपाय सत्याय सर्वरूपाय ते नमः ॥[१]

उपनिषत्तादृशी विद्या वर्तते, यत्समित्या संसारबीजभूताऽविद्यापि विच्छिद्यते । उपनिषत्तादृशी विद्यास्ति, यदनुसृत्या साधकानां कृते परब्रह्मानुभूतिश्च सुलभायते । उपनिषत्तादृशी विद्या विद्यते, यदनुकृत्या मुमुक्षूणां जन्म-मृत्यु-जरादयो निखिलाश्च तेऽनर्थाः शैथिल्यमधियन्ति । तेनोपनिषद् ब्रह्मविद्यैव । एवंरीत्या उपनिषदां ब्रह्मविद्यात्वपक्षे न काचित् संशीतिः, तथापि गौणीवृत्त्या शब्दस्याऽस्योपयोगो ग्रन्थेषु च समवाप्यते ।[२] इत्थमुपनिषदः षद्लृधातुगतेऽर्थे खलु एतत्प्रयोजनञ्चाभिहितमिति स्पष्टम् । यद्यत् स्वीयं प्रयोजनमुपनिषच्छब्द इङ्गितीकरोति, सकलञ्च तत्प्रयोजनं केवलमुपनिषदां प्रायोगिकाऽनुष्ठानेनैव सम्भवतीति तथ्यमुपनिषद्वर्णिताभिराख्यायिकाभिरेव संसाधितमधीयते ।

उपनिषद्भिर्यदभिहितं तस्याऽद्वैतवेदान्तस्य दार्शनिक्यां विचार भूमौ स्वतःप्रामाण्यमुररीक्रियते । तासामौपनिषदानामभिव्यक्तीनां प्रमाणीकरणाय पुनः प्रमाणान्तरं नापेक्ष्यते । उपनिषदामेव प्रामाण्याऽऽधार-भूमिमाश्रित्य गर्जनशीलं दर्शनं विद्यतेऽद्वैतवेदान्तः ।

---

१. स्वरचितम्

२. अविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनशनादित्यनेकाऽर्थयोगेन विद्या उपनिषदित्युच्यते । मुमुक्षून्वा परं ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद् ब्रह्मविद्योपनिषद् । गर्भवास-जन्म-जराऽऽद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्याऽवसादयितृत्वेन शैथिल्याऽऽपादनेन धात्वर्थयोगा-दग्निविद्याऽप्युपनिषदित्युच्यते । तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्तते ग्रन्थे तु भक्त्येति । (कठोपनिषद्, शाङ्कर-सम्बन्धभाष्यम्)

अत एव तु निगद्यते– “वेदान्तो नाम उपनिषत्प्रमाणम्” ।[३] “सलिल एको द्रष्टाऽद्वैतो भवति”[४], “अद्वैतं चतुर्थं मन्यन्ते स आत्मा”[५] इत्यादीन्युपनिषद्वाक्यानि वेदान्तसम्मतं तदेवाऽद्वैततत्त्वं प्रतिपादयन्ति। ‘न विद्यते द्वैतं यत्र’ अनया व्युत्पत्त्या वेदान्तशास्त्रेऽसावद्वैतात्मा च द्वैताऽभावोपलक्षितत्वेनैव विवक्षितोऽस्ति, न तु द्वैताऽभावविशिष्टत्वेन। अनेन द्वैताऽभावोपलक्षितेनाऽऽत्मना प्रत्यक्षादि-प्रमाण-सिद्धस्य प्रपञ्चस्य न कश्चिद्विरोध उपपद्यते ।

सकलशास्त्रमूलायाः श्रुतेः प्रामाण्यमाधृत्यैव दार्शनिकविवेचन सरण्यामग्रगण्यत्वमापन्नं दर्शनमिदं सर्वोत्तम-दर्शनत्वेन परिचय-सम्पादकमन्यतमं वैशिष्ट्यं बिभर्ति। तेनैव दर्शनस्यामुष्य पुरत इतराणि सर्वाणि दर्शनानि प्रयोजनशून्यानि प्रतिभान्ति। वेदान्तदर्शनस्योपस्थितेः प्रागेव इतरेषां दार्शनिकानां कोलाहलमाकर्ण्यते। यदा तु दर्शनेनाऽमुना सह स्पर्धा भवति, तदानीं सिंहं वीक्ष्य जम्बुकानां कोलाहलस्य विलुप्तिरिव तद्दार्शनिकं कोलाहलञ्च स्वतो विलुप्ततामेति ।[६]

वेदा अपौरुषेयाः । वेदानां शाखाभूता खलूपनिषदः । वेदान्तकेशरिणो गर्जनस्य बलवत्तम आधारो हि उपनिषद् । वेदानां [७]श्रुतित्वमुपनिषदां कृतेऽपि समभिधीयते । अत एव तु वेदान्तदर्शने श्रुतिप्रस्थानरूपेण उपनिषदः परिगण्यन्ते। काचन श्रुतिः किञ्चन तत्त्वं प्रतिपादयति, काचनाऽपरा च किञ्चन पृथगेवेति न । समग्रा अपि श्रुतयः तात्पर्यवत्त्वेन केवलमेकमेवाऽऽत्मतत्त्वं प्रतिपादयन्ति ।[८] अतः

३. योगीन्द्रः सदानन्दः, वेदान्तसारः ३
४. बृहदारण्यकोपनिषद् ४।३।३१
५. माण्डूक्योपनिषद् ७
६. तावद् गर्जन्ति शास्त्राणि जम्बुका विपिने यथा।
न गर्जति महाशक्तिर्यावद्वेदान्तकेशरी ॥ (श्रुतमात्रम्)
७. श्रुतिस्तु वेदो विज्ञेयः। (मनुस्मृतिः २।१०)
८. सर्वे वेदा यत्पदमामनन्ति। (कठोपनिषद् १।२।१५)

खलु समेषां श्रुतिवाक्यानामेकवाक्यता सिध्यति ।

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"[९] श्रुतिः प्रपञ्च-मिथ्यात्वस्य निरूपणपुरःसरमात्मनः सत्यत्वाऽभिधाने पर्यवस्यति । वाक्येऽस्मिन् 'एक'-पदेनाऽऽत्मनि सजातीयो भेदो निषिध्यते । 'एका पुस्तिका अस्ती'ति वाक्येन यथा पुस्तिकान्तरस्याऽभावः सिध्यति, तथैवोपनिषद्वाक्यनिहिताभ्यां 'एकं सदि'ति पदाभ्याञ्च सत आत्मनः सजातीयस्य वस्त्वन्तरस्याऽभावः साध्यते । अद्वितीयपदमात्मनि विजातीयं भेदं निषेधति चेद् आत्मनो निरवयवत्वेन स्वगतभेदश्च स्वतोऽनुपपन्नोऽस्ति । 'सदेव इदमग्रे आसीदि'ति वाक्यांशतः प्रपञ्चमिथ्यात्वं स्पष्टं भाति । यतो हि, प्राक् सन्मात्रस्य विद्यमानत्वेन तदाऽविद्यमानस्य प्रपञ्चस्य पश्चादेव दृश्यमानत्वस्य साधितत्वेन त्रिकालाऽबाध्यत्वघटिते सत्यत्वलक्षणे प्रपञ्चो नान्तर्भवति । यन्नादौ यदन्ते च न भविष्यति, तस्य मध्यकाले विद्यमानताऽप्यविद्यमानतैव ।[१०] चतुःश्लोकि भागवतञ्च उपनिषद्वाक्यस्य 'सदेव सोम्येदमग्र आसीदि'त्यस्यैवाऽर्थविस्तारं कुर्वत् प्रपञ्चमिथ्यात्वस्य प्रतिपादनाय समन्वितमालक्ष्यते ।[११]

"नेह नानास्ति किञ्चन"[१२], "नेति नेति"[१३] इत्यादीन्युपनिषद्वचनानि च नूनं प्रपञ्चमिथ्यात्वमभिदधते । अमीभिरुपनिषद्वचनैश्च सद्रूपेण प्रतीयमानस्य प्रपञ्चस्य मिथ्यात्वं निर्दिश्यते । अविद्यासहकृतस्य

---

९. छान्दोग्योपनिषद् ६।२।१

१०. यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत् ।
अतो मिथ्या जगत्सर्वमिति वेदान्तडिण्डिमः ॥ (वेदान्तडिण्डिमः ३७)

११. अहमेवाऽऽसमेवाग्रे नान्यद्यत् सदसत्परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ (श्रीमद्भागवतम् २।९।३२)

१२. बृहदारण्यकोपनिषद् ४।४।१९

१३. बृहदारण्यकोपनिषद् २।३।६

कार्यात्मकस्य प्रपञ्चस्य निषेधेनाऽद्वयस्याऽऽत्मनः प्रतिपादनायैव वाक्यानामेषां प्रयोजनवत्ता प्रतीयते। आत्मनि नामरूपात्मकस्य द्वैतस्य प्रपञ्चस्य त्रैकालिकनिषिध्यमानताया बोधः खलु प्रपञ्चमिथ्यात्वस्य विनिश्चयः । तदर्थमात्मतत्त्वसाक्षात्कारोऽपेक्ष्यते । आत्मतत्त्व-साक्षात्कारेण नामरूपात्मकस्य प्रपञ्चस्य मिथ्यात्वनिश्चयेन तत्त्ववित् कैवल्यानन्दमश्नुते ।[१४] एवमेव[१५] "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि" त्यनेनोपनिषद्वचनेन च मृत्कार्यस्य घटादेर्मिथ्यात्व-निरूपक-दृष्टान्त-प्रदर्शन-व्याजेनऽऽत्मकार्यस्य प्रपञ्चस्यैव मिथ्यात्वमभिधीयते।

यावदात्मतत्त्वस्य साक्षात्कारो न साध्यते, तावत् प्रपञ्चस्य प्रत्यक्षसिद्धं सत्यत्वं न कथञ्चन तिरोभवति । प्रपञ्चसत्यत्वस्य प्रतीतिरवशिष्यत एव । 'सन् घटः', 'सन् पटः' इत्यादयो वाग्व्यवहाराः तत्प्रतीतौ प्रमाणानि सततं समुपस्थापयन्ति । व्यवह्रियमाणेन घटादिपदार्थेन सहैव समग्रमपि दृश्यमानं प्रपञ्चं प्रति आत्मनोऽभिन्ननिमित्तोपादानतोपनिषद्भिरभिहितापि[१६], एतत्तथ्यस्य प्राबल्ये हि प्रपञ्चस्याऽऽत्मविवर्तत्वस्याऽद्वैतदर्शनसम्मतत्वेऽपि[१७] केवलमविद्योपहितत्वहेतुना जीवः प्रपञ्चमिथ्यात्वमनुभवितुं न क्षमते।

---

१४. यथा नद्यः स्यन्दमानाः समुद्रे, अस्तङ्गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥ (मुण्डकोपनिषद् २।३।८

१५. छान्दोग्योपनिषद् ६।१।४

१६. यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात् केशलोमानि, तथाऽक्षरात् सम्भवतीह विश्वम्॥
(मुण्डकोपनिषद् १।१।७)

१७. आरम्भवादः कणभक्षपक्षः सङ्घातवादस्तु भदन्तपक्षः।
साङ्ख्यादिवादः परिणामवादः, वेदान्तवादस्तु विवर्तवादः॥
(सङ्क्षेपशारीरकम् २।१६२)

"आत्मैवेदं सर्वम्"[१८], "इदं सर्वं यदयमात्मा"[१९], "सर्वं खल्विदं ब्रह्म"[२०], "ब्रह्मैवेदंविश्वमिदम्"[२१], "एकमेवाऽद्वितीयम्"[२२], "एकधैवाऽनुद्रष्टव्यम्"[२३] इत्यादिभिरुपनिषद्वचनैरात्मनः सत्यत्वैकत्वयोः ख्यापनपुरःसरं तमेव विवर्तवादमेकत्ववादं वा सम्पुटीकृतं विद्यते।

मान्यतायाः पक्ष एकत्र वर्तते, अनुभूतेः पक्षश्चाऽपरत्र। गुरूपदेशस्य वेदान्तवाक्यानां वा श्रवणपूर्वकं तत्र विश्वासो मोक्षकामस्यैका विशेषता परन्तु तेषां स्वानुभूतौ प्रतिफलनं पृथगेव वैशिष्ट्यमावहति। यद्यपि शास्त्रस्य प्रवचनञ्च ब्रह्माऽभ्यासस्यैवाऽन्यतमा प्रक्रिया[२४] तथापि केवलं शास्त्रीयचर्चया कालयापनेन, औपनिषदस्य तत्त्वस्य गुण-वैशिष्ट्य-विकत्थनमात्रेण वा तादृशि शास्त्राऽभ्यासिनि तत्त्ववित्त्वं विनिश्चेतुं न शक्यते। तेनैव तु अद्वैताचार्यैः शास्त्रीयस्य शब्दजालस्य वाग्वैयर्थ्यस्य चित्तभ्रमितेश्च हेतुत्वमभिहितमस्ति।[२५]

ऋते श्रद्धाया जिज्ञासौ तत्त्वज्ञानाऽधिकारित्वं नैवाधीयते। अत एव गुरु-वेदान्त-वचनेषु विश्वासरूपिणी श्रद्धा[२६] विवक्षितास्ति। अधिकारित्वस्य प्रथमयोग्यताभूतस्य नित्याऽनित्यवस्तुविवेकस्या-

---

१८. छान्दोग्योपनिषद् ७।२५।२
१९. बृहदारण्यकोपनिषद् २।४।५
२०. छान्दोग्योपनिषद् ३।१४।१
२१. मुण्डकोपनिषद् २।२।११
२२. छान्दोग्योपनिषद् ६।२।१
२३. बृहदारण्यकोपनिषद् ४।४।२०
२४. तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्।
एतदेकपरत्वञ्च ब्रह्माऽभ्यासं विदुर्बुधाः॥ (लघुवाक्यवृत्तिः १७)
२५. नाऽनुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत्।
(आचार्य याज्ञवल्क्यः, बृहदारण्यकोपनिषद् ४।४।२१)
शब्दजालं महारण्यं चित्तभ्रमणकारणम्।
(आचार्यशङ्करः, विवेकचूडामणिः ६०)

ऽवाप्तये च शास्त्रश्रवणमपेक्षितम् । शास्त्रनिर्दिष्टेन नित्याऽनित्य-वस्तु-विवेकादिमुमुक्षुत्वान्तेन साधनचतुष्टयेन[२७] कश्चन साधकः सम्पन्नोऽस्ति चेदपि तदवाप्तव्यं मूलं लक्ष्यन्तु नूनमवशिष्यते । तद्धि तत्त्वज्ञानं तत्साध्यं कैवल्यञ्च । एतदर्थमेव उपनिषदामुपदेशप्रवृत्तिः संलक्ष्यते ।

उपनिषदः केवलं तत्त्वोपदेशं न हि विदधति । तत्त्वोपदेशस्याऽपेक्षाम्, ज्ञाते तत्त्वे लाभम्, अविज्ञाते तस्मिन् हानिञ्च वर्णयन्ति । तस्मात्तस्याऽविनाशिन आत्मतत्त्वस्य बोधेन विनाऽऽयुक्षपकस्य कार्पण्यम्, बोधपूर्वकं देहत्यागिनो ब्राह्मणत्वञ्चोपनिषद्भिरभिहितं वर्तते ।[२८] एवञ्च शरीरेऽविनष्टे हि तत्त्वसाक्षात्कारस्य कर्तव्यतामभिदधाना श्रुतिः तद्विहीनस्य महती हानिर्भविष्यतीति च निर्दिश्य तत्त्वसाक्षात्काराय जनान् प्रेरयति ।[२९]

शास्त्राण्येकमेव तत्त्वं पृथक्शैलीभिर्वर्णयन्ति । सुधिय एकमेव सत्यं विविधनामभिर्निर्दिशन्ति ।[३०] येन केनाऽपि प्रकारेणाऽभिदधीरन् परन्तु सकलैरपि शास्त्रैः तात्पर्येण एकमेव वस्तुतत्त्वं लक्ष्यीकृतमालक्ष्यते । सर्वाणि चामूनि शास्त्राणि तस्यैवैकस्याऽद्वितीयस्याऽऽत्मतत्त्वस्य प्रतिपादनायाऽभिप्रेतानि सन्दृश्यन्ते ।[३१] यावन्त्यपि

---

२६. श्रद्धा का ॥९॥ गुरुवेदान्तवाक्येषु विश्वासः । (तत्त्वबोधः)

२७. साधनचतुष्टयं किम् ॥१॥
नित्यानित्यवस्तुविवेकः । इहामुत्रार्थभोगविरागः । शमादिषट्कसम्पत्तिः । मुमुक्षुत्वञ्चेति । (ब्रह्मसूत्रशाङ्करभाष्यम् १।१।१।१)

२८. यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः,
अथ य एतदक्षरं गार्गि ! विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः ॥
(बृहदारण्यकोपनिषद् ३।९।१०)

२९. इह चेदवेदीदथ सत्यमस्ति, न चेदिहाऽवेदीन्महती विनष्टिः । (केनोपनिषद् २।५)

३०. एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः । (ऋग्वेदः १।१६४।४६)

३१. तत्तु समन्वयात् । (ब्रह्मसूत्रम् १।१।१।१)

शास्त्राणि परिशील्येरन्, यावत्यपि ग्रन्थग्रन्थयो विभिद्येरन्, ऋते ज्ञानान्मुक्तिर्न हि कथमपि सम्भवति । अविज्ञातेऽमुष्मिन् आत्मतत्त्वे भवदुःखस्याऽऽत्यन्तिकी निवृत्तिरलभ्यैव ।[३२]

औपन्यासिकं पदार्थज्ञानमौपनिषदं तत्त्वज्ञानञ्च पृथक् । पदार्थविषयकेण ज्ञानेन प्रकाश्यो भवति केवलं तज्ज्ञानविषयीभूतः पदार्थः । अत एव पदार्थज्ञानाय तत्र तत्र प्रतिविषयं पृथक् प्रयत्ना अपेक्ष्यन्ते । पदार्थानां पृथग्विषयीकरणेनैव तत्र पदार्थप्रकाशनं सम्भवति परन्तु तत्त्वज्ञानस्य सन्दर्भोऽत्यन्तं पृथगस्ति । नूनमयमाश्चर्यपूर्णोऽस्ति।[३३] यतो हि, तत्त्वविदः कृत आत्माऽध्यस्ताना-मितरेषां वस्तूनाञ्च साकल्येन विदितत्वमभिमतम् ।[३४] आत्मतत्त्वस्य विज्ञानाऽनन्तरं न किञ्चिद्विज्ञेयान्तरमवशिष्यते । तेनैव तु तत्त्वबोधाऽभावे शास्त्राऽध्ययनस्य वैयर्थ्यं सिद्धञ्चेत्तत्त्वबोधानन्तरञ्च तदध्ययनं निष्प्रयोजनं खलु ।[३५]

ज्ञानस्यैव निर्विकल्पत्वेन कैवल्यसाधनत्वपक्षे सकला अपि उपनिषद ऐकमत्यं प्रस्तुवन्ति। “प्रज्ञानेनैनमाप्नुयात्”[३६], “ऋते ज्ञानान्न

---

३२. यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्याऽन्तो भविष्यति ॥ (श्वेताश्वेतरोपनिषद् ६।१९)

३३. श्रवणायाऽपि बहुरभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा-
ऽऽश्चर्यो ज्ञाता कुशलाऽनुशिष्टः ॥ (कठोपनिषद् १।२।७)

३४. कस्मिन्नु खलु विज्ञाते सर्वमिदं विज्ञातं भवति ? (मुण्डकोपनिषद् १।१।१)
येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । (छान्दोग्योपनिषद् ६।३।१)

३५. अविज्ञाते परे तत्त्वे शास्त्राऽधीतिस्तु निष्फला ।
विज्ञातेऽपि परे तत्त्वे शास्त्राऽधीतिस्तु निष्फला ॥ (विवेकचूडामणिः ५९)

३६. कठोपनिषद् १।२।२४

मुक्तिः"[३७], "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[३८], "ब्रह्मविदाप्नोति परम्"[३९], "तरति शोकमात्मवित्"[४०], "ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः"[४१], "ज्ञात्वा देवं सर्वपाशापहानिः"[४२], "निचाय्य तन्मृत्युमुखात् प्रमुच्यते"[४३] इत्यादिभिरुपनिषद्वचनैः खलु मोक्षस्य तदेव ज्ञानसाध्यत्वं समुपदिष्टम् ।

शम-दमादिसाधनाऽनुष्ठानेन विना ज्ञानाऽधिकारित्वस्याऽर्जना-ऽशक्यत्वे शास्त्रस्य सुस्पष्टं निर्देशनं विद्यते ।[४४] शम-दमादि-साधनानामनुष्ठानं कुर्वति जिज्ञासौ हि वैराग्यभावः समुदेति । "नित्यानित्यवस्तुविवेकः" एवञ्च "इहामुत्रार्थभोगविरागः" भूत्वा शमादिसाधनाऽभ्यास-प्रवृत्तस्याऽहम्भाव-ममभावयोर्मनोमालिन्यं स्वतो विलीयते ।

वस्तुतोऽहम्भाव-ममभावयोर्गर्तोऽतीव भयावहोऽस्ति । अहम्भाव-स्यैवाऽधारभूमिमाश्रित्य ममभावः स्वास्तित्वं साधयति तथापि भवाब्धिचक्रवाताऽवपातहेतुत्वेन ममभाव एवाऽधिकतरां भूमिकां निर्वहति । अस्मिन्नवपातनाऽनन्तरं ततः समुद्गमनं दुष्करन्तु वर्तत एव तथापि वेदान्तशास्त्रं येन केन प्रकारेण ततः समुन्मुक्तये सततं सदुपदेशान् प्रयच्छति । 'मे अपत्यम्', 'मे कलत्रम्',

---

३७. बृहदारण्यकोपनिषद् १।३।२८

३८. श्वेताश्वेतरोपनिषद् ३।८

३९. तैत्तिरीयोपनिषद् २।११

४०. छान्दोग्योपनिषद् ७।१।३

४१. कठोपनिषद् २।३।१८

४२. श्वेताश्वेतरोपनिषद् १।११

४३. कठोपनिषद् १।३।१५

४४. शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति ।
(बृहदारण्यकोपनिषद् ४।४।४)

'मे धनम्' 'मे बान्धवाः' इत्येवंरीत्या 'मे मे' इति भाषमाणो ममत्वगर्ते निमग्नो मानवोऽज एवेति शास्त्रं समुद्घोषयति। कालवृकः तादृशस्यैवाऽजस्याऽऽखेटक्रीडया प्रियान् प्राणान् बलाद्धरतीति च सुनिश्चितम्।[४५] अत एव तु शास्त्रं हितमुपदिशति यद्धस्तेन हस्तं सम्पीड्य, दन्तैर्दन्तान् विचूर्ण्य, अङ्गैरङ्गानि निष्पीड्य वा भवेत्, स्वीयं चलं चित्तं जयेदिति।[४६]

वैराग्यभावं समारूढैर्वीतरागै-र्मुमुक्षुभिः तत्त्वबोधार्थं गुरूपसत्ति-र्विधेयेति श्रुतिः[४७]स्मृतिश्च[४८] समादिशतः। यतो गुरूपसत्तिपूर्वकं गुरूणां सकाशाद् जिज्ञासुमुमुक्षूणां तत्त्वोपदेशाऽवाप्तिर्भवति, तद्विषयिण्यो गुरु-शिष्यसंवादात्मिका आख्यायिका उपनिषद्-भगवद्गीतादिषु तत्त्वनिरूपकग्रन्थेषु भूरिशः समुपलभ्यन्ते। एषु ग्रन्थेषु वर्णितानां गुरूपसत्तिपूर्वकाणां तत्त्वोपदेश-सन्दर्भाणां समीक्षणक्रमे अङ्गिरा-शौनकौ[४९], जनक-याज्ञवल्क्यौ[५०], श्रीकृष्णार्जुनौ[५१], यम-

---

४५. अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे।
जल्पन्तमिति मर्त्याजं हन्ति कालवृको बलात्॥ (गरुडपुराणम् २।४९।३९)

४६. हस्तं हस्तेन सम्पीड्य दन्तैर्दन्तान् विचूर्ण्य च।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः॥ (मुक्तिकोपनिषद् ४२)

४७. तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। (मुण्डकश्रुतिः १।२।१२)

४८. तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ (भगवद्गीता १४।३४)

४९. शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ।
(मुण्डकोपनिषद् १।१।३)

५०. जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच
नमस्तेऽस्तु याज्ञवल्क्याऽनु मा शाधीति। (बृहदारण्यकोपनिषद् ४।२।१)

५१. शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्। (भगवद्गीता २।७)

नचिकेतारौ[५२], सुकेश-पिप्पलादौ[५३], भृगु-वरुणौ[५४], रैक्व-जानश्रुती[५५] इत्यादीनि भूयांसि गुरु-शिष्ययुग्मानि समवाप्यन्ते । एवंरीत्या उपनिषद्भिर्विविधाभि-राख्यायिकाभि-र्गुरूपसत्ति-र्दृष्टान्ततः सुस्पष्टं प्रदर्शिताऽवाप्यते चेत्तत्त्वज्ञानाय गुरोरपेक्षायाः तदुपसत्तेश्च पृथक्तया निर्देशनमपि तत्र तत्र दृग्गोचरीक्रियते ।[५६]

वेदान्तस्य सैद्धान्तिकः पक्ष उपनिषद्भ्यः खलु सर्वांशेन प्रदर्शितः प्रतिपादितश्चानुभूयते । तस्माद्वेदान्तस्य कृत उपनिषद एव मूलजीवनशक्तयः । नैकासु वेदशाखासूपनिषदः परिगण्यन्ते । तेष्वपि अध्ययनाऽध्यापनयोः, साधनायाः परम्परासु च विशेषतः प्रयुक्तानां सुप्रथितानामुपनिषदां सङ्ख्या दश वर्तते ।[५७] ईशादिदशोपनिषद्भिः सह तत्त्वप्रतिपादनस्येयत्तायाश्च दृष्ट्या इतराभ्यः किञ्चिद्विशिष्टतरां श्वेताश्वेतरोपनिषदञ्चाऽऽहत्यैकादशसूपनिषत्सु कारिकाग्रन्थोऽयं संरचितः समीक्ष्यते ।

उपनिषत्सु अनल्पैः प्राचीनाचार्यैः लेखनी धावितास्ति । तेषु चाचार्यशङ्करस्य परमगुरुणा गौडपादाचार्येण माण्डूक्योपनिषदि

---

५२. एतद्विद्यामनुशिष्टस्त्वयाऽहम् । (कठोपनिषद् १।१।२०)

५३. सुकेशा च भारद्वाजः... ते ह
समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः । (प्रश्नोपनिषद् १।१)

५४. भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति ।
(तैत्तिरीयोपनिषद् ३।१।१)

५५. तदुह जानश्रुतिः । रैक्व... नु म एतां भगवो देवताँ शाधि यां देवतामुपास्स इति ।
(छान्दोग्योपनिषद् ४।२।१-२)

५६. आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति । (छान्दोग्योपनिषद् ४।९।३)
तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत् । (मुण्डकोपनिषद् १।२।१२)
आचार्यवान् पुरुषो वेद । (छान्दोग्योपनिषद् ६।१४।२)

५७. ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः ।
ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा ॥ (श्रुतमात्रम्)

वैदुष्यपूरितो माण्डूक्यकारिकाऽभिधः कारिकाग्रन्थो विरचितोऽव-लोक्यते । उपनिषत्सु आचार्यशङ्करस्य भाष्यप्रणयनाऽनन्तरं तासूपनिषत्सु शाङ्करभाष्येषु च लेखनीसञ्चालकैर्विद्वद्भिः तत्र तत्र टीका-व्याख्यासरित्तरङ्गौघ एवाऽऽविष्कृतोऽनुभूयते । कालदृष्ट्यादः किञ्चित्पुरातनं तथ्यमस्ति । तत्त्व-प्रतिपादिकासूपनिषत्सु गूढग्रन्थेषु कलमकलनायापि सुमहान् आयासः समासादनीयो भवति । अत एव साम्प्रतमुपनिषद्ग्रन्थेषु बुद्धिविलासः शून्यप्रायः समधिगम्यते ।

सकलस्यापि संसारस्य अत्युत्तमेषूपनिषद्ग्रन्थेषु सञ्चालिता साहसभरिता लेखनी नूनं श्लाघ्यतरा । श्रद्धेयस्य विदुषः शरत्कुमार भट्टराई-वर्यस्याऽमुना साहसिकसत्कार्येणाऽद्वैतवेदान्तस्य जगते समुत्कृष्टं विचारौषधं समुपहृतं संलक्ष्यते । गूढतम-तात्पर्य-समन्वितोपनिषद्-ग्रन्थविषयिणी यावती उत्कृष्टाऽभिव्यक्ति-रेकस्याऽध्येतु-र्मस्तिष्काज्जायते, तच्छतगुणिता समुत्कृष्टतराभिव्यक्तिरेकस्य साधकस्य हृदयात् सम्भवति । सामान्यस्याऽध्ये-तुर्लेखनी केवलं शास्त्रीयदृष्टेरूहापोहपदमालिकां गुम्फति चेत् साधकलेखनी शास्त्रीयेषूमुषूहापोहेषु स्वानुभूतिञ्च सम्मिश्रीकृत्याऽभिव्यक्तिँराज-पथे सन्धावति । कारिकाग्रन्थेऽस्मिन् ग्रन्थकारस्यैतादृशी खलु प्रौढस्वानुभूतिसंवलिता प्रस्तुतिर्ज्ञप्तिविषयीक्रियते ।

वस्तुतः कारिकाग्रन्थोऽयं नहि कस्यचनाऽध्येतुर्यत्किञ्चिदध्ययनस्य प्रस्तुतिमात्रम्, अपितु अद्वैतवेदान्तस्यैकस्य प्रबुद्धचिन्तकस्य भावाऽभिव्यक्तिरस्तीति तथ्यमस्यैव ग्रन्थस्य पृष्ठेषु चित्ताधानेन चिन्तनँ-शैलस्याऽऽरोहणक्रमे समनुभूयते । तस्माद् ग्रन्थस्याऽस्य कारिकासु रचयितृमस्तिष्कमात्रं न भाषते, अपि च साधकहृदयस्याऽपि युगपद्-भाषमाणत्वमनुभूयते । एवं ग्रन्थकर्तु-र्वेदान्त-शास्त्र-विषयकं चिरन्तन-चिन्तनस्य, साधनायाश्च परिपाको ग्रन्थेऽस्मिन् समीक्ष्यते । एतादृशस्य

वेदान्तराद्धान्तपरिलसितस्य कारिकाग्रन्थस्याऽमरगिराऽनुवादेन विद्या-वारिधिपदमलङ्कुर्वता विदुषा लक्ष्मीकान्तवर्येण यत् साधु कर्म समाचरितं तच्चातीव श्लाघनीयम् ।

कारिकाग्रन्थेऽस्मिन् प्रयुक्तया गुरु-शिष्यविषयिण्या प्रश्नोत्तरात्मिकया संवादशैल्या[५८] उपनिषन्निहित-गूढतात्पर्याणां साहज्येनाऽवबोधाय सम्यग् भूमिका निर्व्यूढानुभूयते । संवादस्य प्रमुखपात्रत्वेन गुरुशिष्ययोर्विद्यमानत्वेऽपि उद्दालक-श्वेतकेतू, नारद-सनत्कुमारा-वित्यादिरीत्या नामश औपनिषदानां गुरु-शिष्ययुग्मानाञ्च[५९] संवादपात्रत्वेन साक्षात् प्रस्तवनेनेह उपनिषद्विषयप्रतिपादनस्य प्रभावकारिता इतोऽपि संवर्धिता समीक्ष्यते ।

इह न केवलमुपनिषत्सु वर्णितानां विषयाणामुपस्थापनं विद्यतेऽपि तु तत्तात्पर्यबोधिका प्रस्तुतिरपि सम्प्राप्यते । उपनिषदां विशेष-संवाद-सन्दर्भान् विशिष्य पृथक् शीर्षकाणि च परिकल्प्य विहिता तत्प्रस्तुतिरत्र वीक्ष्यते चेद् माण्डूक्योपनिषदा सहैव माण्डूक्यकारिकायाश्च ग्रन्थविषयीकरणेन कारिकाग्रन्थस्य विषय-गाम्भीर्यं सौन्दर्यञ्चोपचितमालक्ष्यते । सुबोधसंवादशैल्याविरचितया-ऽमुया कृतिनाऽद्वैतवेदान्तस्य ग्रन्थालयस्य समृद्धिर्निश्चयेनोपचेष्यते,

---

५८. शिष्यः – अतद्वस्तुक्षयं कृत्वा कथं ज्ञानी भवेद् गुरो ।
तद्रूपं ब्रह्म भवतीत्यत्र मेऽतीव संशयः ।।
गुरुः – अतद्वस्तु ह्यविद्यास्ति तस्य नाशे तु निश्चितम् ।
सद् ब्रह्म शान्तमद्वैतं शेषं तिष्ठति निश्चितम् ।।
(उपनिषत्कारिका, पूर्वार्धः २७८, २८०)

५९. शौनकः – का काऽस्तिके भगवन् ! सुश्रुषुरधुना त्वहम् ।
यज्ज्ञात्वा सम्भवेद् ब्रह्मज्ञानं भूयाद्विनिश्चितम् ।।
अङ्गिरा– जानीहि ऋग्यजुःसामाऽथर्ववेदादयोऽपरा ।
यथाऽक्षराऽऽत्मनो ज्ञानं भवेत् सा तु परा स्मृता ।। (मुण्डकोपनिषत्कारिका ७-८)

एवञ्च दार्शनिकजगतः शोभामपीयं साधयतीति च कृतेरस्याः परिशीलनेनाऽनुमीयते।

एतादृशस्यग्रन्थप्रणयनस्याऽभ्यासेन ग्रन्थप्रणेतुर्भट्टराईवर्यस्य चिन्तनमुत्तरोत्तरं दाढ्र्यमाकलयतीति निश्चप्रचम्। अतोऽस्यैतत्सदृशानि सत्कार्याणि भविष्यति च नैरन्तर्यमयिषीरन्। अद्वैतवेदान्तस्याऽध्येतारः साधकाश्चाऽमुष्याऽनुभूतिसंवलितप्रस्तुतभिः सततं लाभमधिगम्यासुः। एवमेव चिन्तनशिलोच्चयसमारोहणाय सामर्थ्योपचितये ग्रन्थरत्नस्याऽस्य रचयित्रे [६०]कृपाचतुष्टयमनारतं प्राप्तिविषयतामापद्येत। किमधिकम्? अमीभिरेव शुभभावैः... । ॐ तत्सत्॥

रोहिणीराजः तिमिल्सिना
उपप्रा. त्रिभुवन-विश्वविद्यालयः

६०. ईश्वरकृपा, आत्मकृपा, गुरुकृपा, शास्त्रकृपा च।

# पुरोवाक्

सर्वेषां वेदानां ब्राह्मणग्रन्थाः सन्ति । एतेषु ऋग्वेदस्य ऐतरेयब्राह्मणम्, यजुर्वेदस्य शतपथब्राह्मणम्, सामवेदस्य ताण्ड्यब्राह्मणमथर्ववेदस्य गोपथब्राह्मणञ्च प्रसिद्धानि सन्ति । वेदानां शाखाश्च बह्व्यो विद्यन्ते ।

उपनिषदो वेदानां शिरोभागो ज्ञानकाण्डञ्चोच्यन्ते । उपनिषद् शब्दो विशरणगत्यवसादनार्थवाहकाद् 'उप' 'नि' चेत्युपसर्गवतः 'षद्लृ' धातोः 'क्विप्' प्रत्ययेन निष्पद्यते । एतस्य विशदव्याख्या व्युत्पत्तिश्च आचार्येण शङ्करेण आत्मनो विभिन्नेषु भाष्येषु विहिते स्तः । कठोपनिषदः सम्बन्धभाष्ये अनेन 'सद्लृधातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदित्युल्लिखितमस्ति । एतस्य प्रतिपाद्यस्य वेद्यस्य च विषयोरपि आचार्येण शङ्करेण सङ्क्षिप्तचर्चा विहितास्ति । यथा 'उपनिषच्छब्देन च व्याचिख्यासित-ग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यन्ते । ये मुमुक्षवो दृष्टानुश्रविक-विषयतृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद् विनाशनादित्यनेनार्थयोगेन विद्या उपनिषदित्युच्यते ।'

एवमेव मुण्डकोपनिषदः सम्बन्धभाष्येऽपि आचार्येण शङ्करेण 'य इमां ब्रह्मविद्यामुपायन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं विशातयति परं वा ब्रह्म गमयत्य-विद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषद् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् ।' इति विलिखितं वर्तते ।

श्रीमद्भगवद्गीतायामुपनिषदः 'ब्रह्मसूत्रपदैः' (१३।४) इति पदेन सम्बोधिताः सन्ति । एतस्य व्याख्यां विदधानः स्वामी मधुसूदनसरस्वती

एतादृशीं टिप्पणीं करोति 'ब्रह्मसूत्रपदैश्चैव ब्रह्म सूत्र्यते सूच्यते किञ्चिद्व्यवधानेन प्रतिपाद्यत एभिरिति ब्रह्मसूत्राणि । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविसन्ति' इत्यादीनि तटस्थलक्षणपराण्युपनिषद्वाक्यानि । तथा पद्यते ब्रह्मसाक्षात्प्रतिपाद्यत एभिरिति पदानि स्वरूपलक्षणं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि तैर्ब्रह्मसूत्रैः पदैश्च ।'

उपनिषत्सु नैकविधविदुषां स्वानुकूला व्याख्याः प्राप्यन्ते । धर्मसम्राट् स्वामी करपात्री उपनिषदस्तात्पर्यं प्रकाशयन् कथयति– प्रत्यक् चैतन्याभिन्नपरमात्मनः प्रापिकाभिव्यञ्जिका वा निःसन्धि-बन्धनात्मिकाया चिज्जडग्रन्थिस्वरूपायाश्च अविद्यायाः शिथिल-कारिणी अविचारितरमणीयं नामरूपक्रियात्मकं मायामयं विश्वप्रपञ्चं समूलमुन्मूल्य जीवाय ब्रह्मात्मबोधिका च ब्रह्मविद्यैव उपनिषदस्ति । एतदर्थमेतस्या उत्पादकत्वाद् व्यञ्जकत्वाद् वा ईशावास्यकेन-कठादियन्त्रब्राह्मणवेदशीर्षग्रन्थाश्चोपनिषत्पदवाच्या भवन्ति । इमां मन्त्रब्राह्मणोभयस्वरूपवेदशीर्षरूपा उपनिषदो वर्तन्ते । इमाः सर्वा एव अनाद्यवच्छिन्नाः सम्प्रदायपरम्परया प्राप्ता अस्मर्यमाणकर्तृस्वरूपाश्च सन्तीत्यतोऽपौरुषेयवेदस्वरूपा एव ।

वेदशीर्षोपनिषद आधारेणैव भगवता श्रीकृष्णेन अर्जुनाय गीता उपदिष्टा । एवं रीत्या उपनिषदां समन्वयं व्याख्याञ्च सूत्रात्मकरूपेण विधातुं महर्षिवेदव्यासो ब्रह्मसूत्रं प्रणिनाय । न तु एतदेव महाभारत–रामायण–पुराण–धर्मशास्त्राणां विभिन्नानां पन्थसम्प्रदायानाञ्च प्रणयनं सर्जनञ्च एतासामेव मन्त्र ब्राह्मणारण्यकोपनिषदामाधारे समभवताम् । उपनिषदामभावेऽस्माकं सम्पूर्णा धर्म–संस्कृति–सभ्यता–भाषाऽऽचारविचाररीतयः परिकल्पितुमपि न शक्यन्ते । एतासां सर्वासां मूलधारा उपनिषद एव ।

उपनिषदां विषये स्वामिनोऽखण्डानन्दस्य विचार एतादृशः- वेदशब्दस्यार्थो ज्ञानम् । वेदपुरुषस्य शिरोभाग उपनिषत् कथ्यते । 'उप' अर्थाद् व्यवधानराहित्यम् 'नि' अर्थात् सम्पूर्णम् 'षद्' अर्थात् ज्ञानञ्च उपनिषदोऽवयवार्थः । एतत् सर्वोत्तमं ज्ञानमस्ति यद् ज्ञेयादभिन्नं देश–काल–वस्तूनां परिच्छेदाद्रहितं परिपूर्ण ब्रह्म वर्तते, अयमेवोपनिषदोऽभिप्रेतार्थः ।

चक्रवर्तिनो राजगोपालाचारिणो मतमेतादृशमस्ति – उपनिषदां सारतत्त्वं वेदान्तो निगद्यते । ज्ञानं भक्तिः स्वेषु सम्पूर्णेषु कर्मषु भगवत्छरणागतेर्भावश्च उपनिषदां मथितार्थो वर्तते ।

उपनिषदां विषये विभिन्नानि विचार-परिभाषा-मत-व्युत्पत्ति-निर्वचन-मतान्तराणि दृश्यन्ते । उपनिषदक्षय-ज्ञानस्य भाण्डागारो या 'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये' उक्ता वर्तते । एतस्या अपरा परिभाषा वर्तते – 'उपनिषद्यते प्राप्यते ब्रह्मात्मभावोऽनया इति उपनिषद् ।'

उपनिषद असङ्ख्याः । एतासां मध्ये बहुशो वेदानामेव प्राचीनाङ्गानि शिरोभागा वा सन्ति तदपि काश्चिद् अर्वाचीनाः प्रक्षिप्ताश्च विद्यन्ते । एतासां सङ्ख्या अनिश्चिता । मुक्तिकोपनिषदि अष्टोत्तरशतस्योपनिषदां नामानि दृश्यन्ते । पण्डितजगदीशशास्त्रिणा सम्पादिते मोतीलालवनारसीदासेन १९९८ तमे ख्रिस्टवर्षे प्रकाशिते च उपनिषत्सङ्ग्रे १८८ उपनिषद उल्लिखिताः सन्ति । एतस्य द्वितीयभागस्य शक्तोपनिषत्खण्डस्य एकपञ्चाशत्तमे सङ्ख्याक्रमे संस्कृतारवीयभाषयोर्लिखिता अल्लोपनिषच्च समाविष्टाऽस्ति । मद्रासात् प्रकाशिते उपनिषत्सङ्ग्रहे १७९ उपनिषदां नामानि प्राप्यन्ते । १९४९ ख्रिस्टवर्षस्य जनवरीमासे प्रकाशितस्य कल्याणस्य त्रयोविंशतिवर्षीयायाः प्रथमाङ्कसङ्ख्याः २६६ तम – पूर्ण सङ्ख्यायां

२२० उपनिषदां नामावलिर्दृष्टिपथमायाति। यथा –

अक्षमालोपनिषद्, अक्षिउपनिषद्, अथर्वशिखोपनिषद्, अथर्वशिर उपनिषद्, अद्वयतारकोपनिषद्, अद्वैतोपनिषद्, अद्वैतभावनोपनिषद्, अध्यात्मोपनिषद्, अनुभवसारोपनिषद्, अन्नपूर्णोपनिषद्, अमनस्कोपनिषद्, अमृतनादोपनिषद्, अमृतबिन्दूपनिषद् (ब्रह्मबिन्दूपनिषद्), अरुणोपनिषद्, अल्लोपनिषद्, अवधूतोपनिषद् (वाक्यात्मिका पद्यात्मिका), अवधूतोपनिषद् (पद्यात्मिका), अव्यक्तोपनिषद्, आचमनोपनिषद्, आत्मपूजोपनिषद्, आत्मप्रबोधोपनिषद् (आत्मबोधोपनिषद्), आत्मोपनिषद् (वाक्यात्मिका), आत्मोपनिषद् (पद्यात्मिका), आथर्वणद्वितीयोपनिषद् (वाक्यात्मिका मन्त्रात्मिका), आयुर्वेदोपनिषद्, आरुणिकोपनिषद् (आरुणेय्युपनिषद्), आर्षेयोपनिषद्, आश्रमोपनिषद्, इतिहासोपनिषद् (वाक्यात्मिका पद्यात्मिका), ईशावास्योपनिषद् (उपनिषत्स्तुतिः, शिवरहस्यान्तर्गता, अधुनावधि अनुपलब्धा), ऊर्ध्वपुण्ड्रोपनिषद् (वाक्यात्मिका पद्यात्मिका च), एकाक्षरोपनिषद्, ऐतरेयोपनिषद् (अध्यायात्मिका), ऐतरेयोपनिषद् (खण्डात्मिका), ऐतरेयोपनिषद् (अध्यायात्मिका), कठरुद्रोपनिषद् (कण्ठोपनिषद्), कठोपनिषद्, कठश्रुत्युपनिषद्, कलिसंतरणोपनिषद् (हरिनामोपनिषद्), कात्यायनोपनिषद्, कामर ाजकीलितोद्धारोपनिषद्, कालाग्निरुद्रोपनिषद्, कालिकोपनिषद्, कालीमेधादीक्षितोपनिषद्, कुण्डिकोपनिषद्, कृष्णोपनिषद्, केनोपनिषद्, कैवल्योपनिषद्, कौलोपनिषद्, कौषीतकिब्राह्मणोपनिषद्, क्षुरिकोपनिषद्, गणपत्यथर्वशीर्षोपनिषद्, गणेशपूर्वतापिन्युपनिषद् (वरदपूर्वतापिन्युपनिषद्), गणेशोत्तरतापिन्युपनिषद् (वरदोत्तरतापिन्युपनिषद्), गर्भोपनिषद्, गान्धर्वोपनिषद्, गायत्र्युपनिषद्, गायत्रीरहस्योपनिषद्, गारुडोपनिषद्

(वाक्यात्मिका मन्त्रात्मिका च), गुह्यकाल्युपनिषद्, गुह्यषोढान्यासोपनिषद्, गोपालपूर्वतापिन्युपनिषद्, गोपालोत्तरतापिन्युपनिषद्, गोपीचन्दनोपनिषद्, चतुर्वेदोपनिषद्, चाक्षुषोपनिषद् (चक्षुरुपनिषद्, चक्षूरोगोपनिषद्, नेत्रोपनिषद्), चित्त्युपनिषद्, छागलेयोपनिषद्, छान्दोग्योपनिषद्, जाबालदर्शनोपनिषद्, जाबालोपनिषद्, जाबाल्युपनिषद्, तारसारोपनिषद्, तारोपनिषद्, तुरीयातीतोपनिषद् (तीताबधूतो.) तुरीयोपनिषद्, तुलस्युपनिषद्, तेजोबिन्दूपनिषद्, तैत्तिरीयोपनिषद्,त्रिपाद्विभूतिमहानारायणोपनिषद्, त्रिपुरातापिन्युपनिषद्, त्रिपुरोपनिषद्, त्रिपुरामहोपनिषद्, त्रिशिखिब्रह्मणोपनिषद्, त्रिसुपर्णोपनिषद्, दक्षिणामूर्त्युपनिषद्, दत्तात्रेयोपनिषद्, दत्तोपनिषद्, दुर्वासोपनिषद्, (१) देव्युपनिषद् (पद्यात्मिका मन्त्रात्मिका च) (२) देव्युपनिषद् (शिवरहस्यान्तर्गता अनुपलब्धा), द्वयोपनिषद्, ध्यानबिन्दूपनिषद्, नादबिन्दूपनिषद्, नारदपरिव्राजकोपनिषद्, नारदोपनिषद्, नारायणपूर्वतापिन्युपनिषद्, नारायणोत्तरतापिन्युपनिषद्, नारायणोपनिषद् (नारायणाथर्वशीर्ष), निरालम्बोपनिषद्, निरुक्तोपनिषद्, निर्वाणोपनिषद्, नीलरुद्रोपनिषद्, नृसिंहपूर्वतापिन्युपनिषद्, नृसिंहषट्चक्रोपनिषद्, नृसिंहोत्तरतापिन्युपनिषद्, पञ्चब्रह्मोपनिषद्, परब्रह्मोपनिषद्, परमहंसपरिव्राजकोपनिषद्, परमहंसोपनिषद्, पारमात्मिकोपनिषद्, पारायणोपनिषद्, पाशुपतब्रह्मोपनिषद्, पिण्डोपनिषद्, पीताम्बरोपनिषद्, पुरुषसूक्तोपनिषद्, पैङ्गलोपनिषद्, प्रणवोपनिषद् (पद्यात्मिका), प्रणवोपनिषद् (वाक्यात्मिका), प्रश्नोपनिषद्, प्राणाग्निहोत्रोपनिषद्, बटुकोपनिषद्, बह्वृचोपनिषद्, बाष्कलमन्त्रोपनिषद्, बिल्वोपनिषद् (पद्यात्मिका), बिल्वोपनिषद्

(वाक्यात्मिका), बृहज्जाबालोपनिषद्, बृहदारण्यकोपनिषद्, ब्रह्म-विद्योपनिषद्, ब्रह्मोपनिषद्, भगवद्गीतोपनिषद्, भवसंतरणोपनिषद्, भस्मजाबालोपनिषद्,भावनोपनिषद्(कापिलोपनिषद्),भिक्षुकोपनिषद्, मठाम्नायोपनिषद्, मण्डलब्राह्मणोपनिषद्, मन्त्रिकोपनिषद् (चूलिको-पनिषद्), मल्लायुपनिषद्, महानारायणोपनिषद् (बृहन्नारायणो-पनिषद्, उत्तरनारायणोपनिषद्), महावाक्योपनिषद्, महोपनिषद्, माण्डूक्योपनिषद्, माण्डूक्योपनिषत्कारिका (क)आगमः (ख) अलातशान्तिः (ग) वैतथ्यम् (घ) अद्वैतम्, मुक्तिकोपनिषद्, मुण्डकोपनिषद्, मुद्गलोपनिषद्, मृत्युलाङ्गूलोपनिषद्, मैत्रायण्युपनिषद्, मैत्रेय्युपनिषद्, यज्ञोपवीतोपनिषद्, याज्ञवल्क्योपनिषद्, योगकुण्डल्यु-पनिषद्, योगचूडामण्युपनिषद्, (१) योगतत्त्वोपनिषद्, (२) योगतत्त्वो-पनिषद्, योगराजोपनिषद्, योगशिखोपनिषद्, योगोपनिषद्, राजश्यामलारहस्योपनिषद्, राधिकोपनिषद् (वाक्यात्मिका), राधोपनिषद् (वाक्यात्मिका), रामपूर्वतापिन्युपनिषद्, रामरहस्योपनिषद्, रामोत्तरतापिन्युपनिषद्, रुद्रहृदयोपनिषद्, रुद्राक्षजाबालोपनिषद्, रुद्रोपनिषद्, लक्ष्म्युपनिषद्, लाङ्गूलोपनिषद्, लिङ्गोपनिषद्, बज्रपञ्जरोपनिषद्, वज्रसूचिकोपनिषद्, वनदुर्गोपनिषद्, वराहोपनिषद्, वासुदेवोपनिषद्, विश्रामोपनिषद्, विष्णुहृदयोपनिषद्, शरभोपनिषद्, शाट्यायनीयोपनिषद्, शाण्डिल्योपनिषद्, शारीर-कोपनिषद्, (१) शिवसङ्कल्पोपनिषद्, (२) शिवसङ्कल्पोपनिषद्, शिवोपनिषद्, शुकरहस्योपनिषद्, शौनकोपनिषद्, श्यामोपनिषद्, श्रीकृष्णपुरुषोत्तमसिद्धान्तोपनिषद्, श्रीचक्रोपनिषद्, श्रीविद्यातारको-पनिषद्, श्रीसूक्तम्, श्वेताश्वतरोपनिषद्, षोढोपनिषद्, सङ्कर्षणोपनिषद्, सदानन्दोपनिषद्, सन्ध्योपनिषद्, संन्यासोपनिषद्

(अध्यायात्मिका), संन्यासोपनिषद् (वाक्यात्मिका), सरस्वती-रहस्योपनिषद्, सर्वसारोपनिषद् (सर्वोप.), स ह वै उपनिषद्, संहितोपनिषद्, सामरहस्योपनिषद्, सावित्र्युपनिषद्, सिद्धान्तविट्ठ-लोपनिषद्, सिद्धान्तशिखोपनिषद्, सिद्धान्तसारोपनिषद्, सीतोपनिषद्, सुदर्शनोपनिषद्, सुबालोपनिषद्, सुमुख्युपनिषद्, सूर्यतापिन्युपनिषद्, सूर्योपनिषद्, सौभाग्यलक्ष्म्युपनिषद्, स्कन्दोपनिषद्, स्वसंवेद्योपनिषद्, हयग्रीवोपनिषद्, हंसषोढोपनिषद्, हंसोपनिषद्, हेरम्बोपनिषद् ।

उल्लिखिताभ्य एताभ्य उपनिषद्भ्य एव एतासां सङ्ख्या ज्ञातुं न शक्यते । वेदानां मन्त्रभगानां संहिता इव ब्राह्मणारण्यकवच्च उपनिषदोऽपि भवन्ति । वेदानां सङ्ख्याया विषये शास्त्रं निर्दिशति – 'अनन्ता वेदाः ।' अधुनावधि प्राप्तानां प्रमाणानामाधारे वेदशाखानां सङ्ख्या महाभाष्ये ११३१, स्कन्दपुराणे ११३७, मुक्तिकोपनिषादि ११८० चेति उल्लिखिता वर्तते । वेदशाखावदुपनिषदोऽपि लुप्ताः सम्भवेषुः । "नैव वै वेदाः प्रलीयन्ते महाप्रलयेऽपि" इति मेधातिथिना उल्लिखितं सदपि इदानीं नोपलब्धिं युगधर्मं विडम्बनां वा वक्तुं शक्नुमः ।

उल्लिखितासु अल्लोपनिषदं विहाय प्रायः सर्वा उपनिषदः संस्कृतभाषायां लिखिताः सन्ति । इमाः प्रायो वेदानां शिरोभागा ज्ञानभाण्डागाराश्च विद्यन्ते । काश्चित्तु पश्चाद् लिखिता लेखिताश्च दरीदृश्यन्ते । उदाहरणार्थमुपरि निर्दिष्टा अल्लोपनिषद् मन्तुं शक्यते । उपनिषदां नितरां महत्त्वं निभाल्य मुगलसम्राजोऽकबरस्य समये केनचित् चाटुकारेण विदुषा अरबीयसंस्कृतभाषयोः स्वल्पा-कृतिरल्लोपनिषद् विलिखिता । तदनन्तरमुपनिषदां महत्त्वं न्यूनीकर्तुं म्याक्समूलराभिधेन म्याक्सोपनिषद् विलिख्य सरस्वतीनामिकायां मासिकपत्रिकायां प्रकाशितेति च ज्ञायते । अन्याश्चेतादृश्य उपनिषदो

लिखिताः प्रकाशिता वा भवेयुः एवंविधैः कार्यैरपि उपनिषदां शाश्वतमहत्त्वे महिम्नि च न कापि भिन्नता दृष्टा प्रत्युत प्रतिदिनं महत्त्वं प्रवर्धमानमेवास्ते ।

अस्मदीये पौरस्त्यसंसारे मोक्षविद्यापरम्परायामुपनिषच्छास्त्रस्य महत्त्वमनादिकालतोऽधुनावधि अक्षुण्णं वेविद्यते । एतच्छास्त्रस्य प्रभावः पाश्चात्त्यसंसारेऽपि पूर्वमेवाऽऽसीदिति तद्दर्शनानुशीलनेनावगम्यते । ख्रिष्टवर्षप्रारभणस्य बहुकालपूर्वं ग्रिसदेशे लब्धजन्मा दार्शनिकः सोक्रेटस केनोपनिषदो भाषामभ्यभाषत । केनोपनिषद भाषते – 'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥' (केनोपनिषद् २।३)

अर्थात् यो महापुरुषः परब्रह्मपरमेश्वरस्य साक्षात्कारं कुरुते स परब्रह्म जानामीति न वक्ति, परं यो जानामीति ब्रवीति स परब्रह्म नाधिगच्छति। सोक्रेटस च जीवनान्तसमये शिष्याणां प्रश्नान् समादधान एवमेव प्रावोचत् – 'I am wiser than my contemporaries because I alone know that I know nothing.'

तदनन्तरमपि पाश्चात्त्यानां मध्ये गोल्डस्टार – रोनाल्ड, डायसन, निक्सन, विल्सन, शोपेनहरप्रभृतयो दार्शनिका उपनिषदामध्ययन-मननानुसन्धानानि व्यदधुर्मुक्तकण्ठेन इमाः प्राशंसन् च । प्रशंसकेषु प्रमुखो जर्मनीदेशीयो दार्शनिकः शोपेनहर स्वपुस्तके उपनिषदां गुणगौरवं वर्णयति – 'In the whole world, there is no study to elevating as that of the upanishadas. It has been the solace of my life and it will be the solace of death.' अर्थात् एतस्मिन् विश्वस्मिन् विश्वे उपनिषद्वद् जीवनोन्नायकोऽध्ययनस्य नान्यः कोऽपि विषयः । एतासामध्ययनेनैव मया जीवने शान्तिरधिगता मृत्यावपि शान्तिर्मिलिष्यति ।

डा. यानीबेसेन्ट उपनिषदो मानवचेतनायाः सर्वोच्चफलं मनुते

– 'Personally I regard the Upanishada as the highest product of the human mind, the crystallized wisdom of divinely illumined man.'

एताभिः पङ्क्तिभिरुपनिषदां सङ्ख्यापरम्परामहत्त्वदर्शकः प्रयासो विहितोऽन्येषां देशानां दार्शनिकेषूद्भूतः प्रभावश्च सङ्क्षेपेण उल्लिखितः । इदानीं कतिचिदाचार्यैर्विहिते [१]व्युत्पत्तिपरिभाषे च पादटिप्पण्यां निर्दिष्टे स्तः ।

उपनिषच्छास्त्रमिदं वेदरूपिवृक्षस्य ज्ञानात्मकफलं विद्यते । पराविद्येयं नितरामुत्कृष्टा दुरूहा च मन्यते । अनेन [२]मुमुक्षुरक्षरब्रह्मणो ज्ञानमधिगन्तुं प्रभवति । ब्रह्मविद्यानाम्ना प्रथितं शास्त्रमेतत् स्वयमधीत्य न कोऽपि पारं यातुं शक्नोति । एतद्विद्याया अधिकारी साधनचतुष्टयसम्पन्नो जिज्ञासुर्मुमुक्षुरेव भवितुमर्हति । ब्रह्मज्ञानेन विना मनुष्यो नैव मुक्तिं लभते, एतस्मादृते नान्यः पन्था इति [३]श्रुतेरुद्घोषणम् ।

प्रथमतः साधनचतुष्टयसम्पन्नो जिज्ञासुर्मुमुक्षुः कर्मणा प्राप्तव्यौ इहलोकपरलोकौ[४] परीक्ष्य उताऽऽहो अनयोर्यथार्थं विज्ञाय एतौ प्रति

---

१. क. उपनीय तमात्मानं ब्रह्मापास्तद्वयं यतः ।
निहन्त्यविद्यां तज्जञ्च तस्मादुपनिषद्भवेत् ॥

ख. निहत्यानर्थमूलं स्वाविद्यां प्रत्यक्तया परम् ।
नयत्यपास्तसम्भेदमतो वोपनिषद्भवेत् ॥

ग. प्रवृत्तिहेतून्निशेषांस्तन्मूलोच्छेदकत्वतः ।
यतोऽवसादयेद्विद्यां तस्मादुपनिषद्भवेत् ॥

२. अथ परा यया तदक्षरमधिगम्यते । – मुण्डकोपनिषद् १।१।५

३. तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।
– श्वेताश्वतरोपनिषद् ३।८, शुक्लयजुर्वेदः ३१।१८

४. परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥
– मुण्डकोपनिषद् १।२।१२

विरक्तो भवेत् । यतो हि अनित्येन नाशवता वा कर्मणा नित्यब्रह्मणः प्राप्तिरसम्भवा । इत्यत एतादृशो मुमुक्षुर्मनुष्यो ब्रह्मज्ञानाय हस्तयोः समिधं गृहीत्वा ब्रह्मनिष्ठश्रोत्रियगुरोः शरणं व्रजेदिति श्रुतेर्विधानं वर्तते ।

एतदनुसारेण स्वस्यैव शाखाया वेदो महावाक्यञ्च गुरोर्गुरुमुखी भूत्वा सविधि [५]श्रोतव्ये [६]श्रवणान्तरं, [७]मनन, [८]निदिध्यासन, [९]ब्रह्माभ्यासाश्च विधातव्याः । अन्यथा ब्रह्मज्ञानमसम्भवमिति श्रुतेराचार्याणाञ्च मतम् । श्रोत्रियब्रह्मनिष्ठगुरोः स्वस्यैव वेदशाखाया महावाक्यं श्रोतव्यमेतदेव मुक्तेः [१०]साक्षात्करणमिति आचार्यस्य सर्वज्ञात्ममुनेर्मतं विलोक्यते ।

स्वाध्याय, महावाक्य, ब्रह्मसाक्षात्कार, पञ्चाग्निविद्यानामन्तर सम्बन्धस्य गृहस्थाश्रमिणामन्येषां त्रयाणामाश्रमिणाञ्च कृते मुक्तेर्हेतोः साधनानां वा तुल्यतापार्थक्यादिप्रश्नानां जिज्ञासाया वा विषययोरद्वैतवेदान्तस्य विद्वद्भिः सप्रमाणं जिज्ञासुमुमुक्षुभ्य उत्तरप्रदानमिदानीमावश्यकं वर्तते ।

स्वाध्यायनुशीलनयोः सन्दर्भे प्रस्थानत्रयीमध्यतः श्रुतिप्रस्थानस्य रूपेण प्रसिद्धानां शाङ्करभाष्येण च समलङ्-

---

५. द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः । – बृहदारण्यकोपनिषद् २।४।५

६. श्रवणं नाम वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यावधाराणानुकूला मानसी क्रिया । – वेदान्तपरिभाषा

७. मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः । – वेदान्तपरिभाषा

८. निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्योऽपाकृष्यात्मविषयकस्थैर्यानुकूलो मानसो व्यापारः । – वेदान्तपरिभाषा

९. तच्चिन्तनं तत्कथनं तत्परस्परबोधनम् ।
एतदेकपरत्वञ्च ब्रह्माभ्यासं विदुर्बुधाः ॥ – लघुवाक्यवृत्तिः

१०. स्वाध्यायधर्मपठितं निजवेदशाखा वेदान्तभूमिगतमादरपालितञ्च ।
सन्न्यासिना परदृशा गुरुणोपदिष्टं साक्षान्महावचमेव विमुक्तिहेतुः ॥
– सङ्क्षेपशारीरकम् ३।२९५

कृतानामेकादशोपनिषदां सारस्वरूपः ‘उपनिषत्सारः’ नामको ग्रन्थः प्रकाशितः । तत्पश्चान्न्यायप्रस्थाननाम्ना सुपरिचितस्य ब्रह्मसूत्रस्य सारः ‘ब्रह्मसूत्रसारः’ प्रकाशतामानीतः । एवं क्रमेण स्मृतिप्रस्थानस्य नाम्ना सुपरिचितायाः श्रीमद्भगवद्गीतायाः सारः ‘गीतासारः’ निबन्धस्य रूपेण निबन्धग्रन्थे ‘ब्रह्मविद्या’ इत्यस्मिन् प्रकाशितः ।

अद्वैतवेदान्तस्य मूलाकरग्रन्था उपजीव्यग्रथानां रूपेण वेदब्राह्मणाऽऽरण्यकोपनिषदो मन्यन्ते । उपजीवकानां प्राच्याऽऽस्तिकानां षण्णां दर्शनानां मध्ये मीमांसादर्शनं वा पूर्वमीमांसोत्तरमीमांसादर्शनमद्वैतवेदान्तदर्शनं वा वेदाधृतं दर्शनम् ।

गीतायाः प्रत्येकमध्यायस्य प्रत्येकं श्लोक उपनिषदां मन्त्रेण तात्पर्येण च प्रपूरितः सम्पुटितश्च वर्तते । इत्यतो गीतायाः प्रथमाध्यायत अष्टादशाध्यायपर्यन्तिकासु पुष्पिकासु ‘श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायाम्’ इत्युल्लिखितं दृश्यते । एतावता उपनिषच्छास्त्रस्यैव धरातले ब्रह्मप्राप्तेः साधनभूतायाः श्रीमद्भगवद्गीतायाः प्रासादो विनिर्मित इति स्पष्टीभवति ।

अद्वैतवेदान्तस्य प्रस्थानत्रयीमध्ये तृतीयो ग्रन्थो ‘ब्रह्मसूत्रं’ वर्तते यच्च न्यायप्रस्थानमुच्यते । एतस्मिन् चत्वारोऽध्यायाः षोडश पादा एकनवत्यधिकशतमधिकरणानि पञ्चपञ्चाशदधिकपञ्चशतं सूत्राणि च सन्ति । ब्रह्मसूत्रस्य प्रथमपाद ‘अथातो [११]ब्रह्मजिज्ञासा’ सूत्रादन्तिमम् [१२]‘अनावृत्तिशब्दात्’ सूत्रं यावदखिलानि सूत्राणि उपनिषन्मन्त्रेण गुम्फितानि सन्ति । भगवान् वेदव्यासो ब्रह्मसूत्रनामकं सूत्रग्रन्थं प्रणीतवान् । वेदव्यासेन प्रमाणयुक्तिभिरपि उपनिषदां

---

११. यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म । – तैत्तिरीयोपनिषद् ३।१।१

१२. न च पुनरावर्तते । – छान्दोग्योपनिषद् ८।१५।१

मन्त्राणां प्रतिपाद्यं ज्ञातव्यं वा तत्त्वं ब्रह्मैव इति सन्दर्भश्च सर्वेषां मन्त्राणां साक्षात्साधनान्येव इति प्रतिपाद्य फलवत् फलं साध्यवत् साध्यं वा ब्रह्मैव वर्तते इति च ब्रह्मसूत्रस्यान्ते निरूपितम् ।

इत्थं विचारेण अद्वैतवेदान्तस्य सत्त्वसार आधारश्चोपनिषच्छास्त्रमेव प्रमाणीभवति । एतस्यैवाधारेण अद्वैतवेदान्तस्य निखिलाः सूत्रग्रन्थ-भाष्य-विवरणग्रन्थ-प्रकरणग्रन्थ-विवरण-वृत्ति-निबन्धग्रन्थाः प्रणीताः । एतदनुरूपेणैव 'ब्रह्मसाक्षात्कार, परमसत्य, ब्रह्मविद्या, पराविद्यौपनिषदपुरुष' नामधेयाः 'ऋते ज्ञानान्न मुक्ति' इति शीर्षकीयश्च निबन्धग्रन्था विलिखिताः । एतेषु ग्रन्थेषु अभिव्यक्तो विषय औपनिषदः । सिद्धान्तञ्च संयोज्य अद्वैतवेदान्तगतमत्यन्तमहत्त्वपूर्णं गूढञ्च रहस्यं सङ्क्षिप्य तात्पर्यगतरूपेण कविताया माध्यमेन एतस्मिन 'औपनिषद ज्ञान'-ग्रन्थेऽनुस्यूतं वर्तते । प्रयत्नोऽयमद्वैतवेदान्तस्य जिज्ञासुभ्योऽध्येतृभ्यो मुमुक्षुभ्योऽपि उपयोगी स्यादिति मन्ये ।

आचार्येण सर्वज्ञात्ममुनिना उपनिषद् 'वेदान्तभूमिः' सङ्क्षेपशारीरकम् (३।२९५) प्रोक्ता । अद्वैतवेदान्तपरका उपनिषदः परब्रह्मपरमात्मानं सर्वेषामात्मानमुपादानकारणं विश्वस्य महदायतनं [१३]सूक्ष्मादप्यधिकं सूक्ष्मं नित्यञ्च निगदन्ति । मुमुक्षुपुरुषं सम्बोधयन्त्य उपनिषदः प्रतिपादयन्ति – अयमात्मा ब्रह्म तत्त्वमसि, तत्त्वमेव ।

परब्रह्मपरमात्मा अवयवशून्यः निष्क्रियः शान्तश्च । न तदेव निर्दोषो निर्लेपोऽपि अयं परब्रह्मपरमात्मा अमृतस्य परमसेतुरिति व्याहरन्त्य उपनिषदः परब्रह्मणं मायया मायाविकारेण च रहितं दग्धेन्धनसदृशं ज्वाज्वल्यमानं स्वयं प्रकाशं ज्योतिस्वरूपञ्च वर्णयन्ति । श्रुत्युक्तिर

---

१३. यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं स त्वमेव त्वमेव तत् ॥ – कैवल्योपनिषद् १।१६

स्ति – तादृशं [14]ब्रह्म प्रत्येकं प्राणिनोऽन्तःकरणेऽवस्थितमिति यः पश्यति स निश्चप्रचं शाश्वतसुखमवाप्नोति, तादृशं सुखं प्राप्तुं नान्यः कोऽपि समर्थः ।

औपनिषदज्ञानमेतद् विद्वांसो मानवचेतनायाः सर्वोच्चफलं मुक्तिसोपानं वा ब्रुवन्ति । एतस्या अनुपमविद्यायाः प्रभावोऽप्रत्यक्षरूपेण पाश्चात्त्यदार्शनिकेषु ख्रिस्टाब्दप्रारभणस्य पूर्वमेव सोक्रेटसनाम्नो विदुषः समये एव परिलक्ष्यित इति पूर्वमुल्लिखितम् । तदनन्तरमपि ज्ञानस्याक्षयशाश्वतनिधिभूतानां वेदानामुपनिषदाञ्च प्रभावः पौरस्त्यपाश्चात्त्य विद्वत्सु प्रवर्धितः । भारतस्य तात्कालिकमुगलसम्राजः शाहजाँह–इत्यस्य ज्येष्ठसुपुत्रो दाराशिकोहो धार्मिकदृष्ट्या उदार आसीत् । १६४० ख्रिस्टवर्षे स कास्मिरस्थाने निवसति स्म । तत्र तेन विभिन्नैर्विद्वद्-भिस्सह प्राच्यपाश्चात्त्यदर्शनानां सम्बन्धे जिज्ञासापूर्वकं प्रश्ना उद्भाव्यन्ते स्म । तस्मिन्नेव क्रमे स आसीमज्ञातनिधिभूतानामुपनिषदां महत्त्वमजानात् । स संस्कृतं न जानाति स्म । तेन काशीवासिनः संस्कृतस्य पण्डितानाकार्य १६५७ ख्रिस्टवर्षपर्यन्तमद्वैतवेदान्तपर-काणां पञ्चाशत उपनिषदां फारसी भाषायामनुवादः कारितः । तत्पूर्वं सम्राजोऽकवरस्य शासनकाले १५५६–१५८५ ख्रिस्टवर्षाणां मध्ये कतिचिदुपनिषदामनुवादसम्पादनं दृश्यते ।

फारसीभाषायामनूदितानां कतिचिन्महत्त्वपूर्णानामुपनिषदामेव फ्रान्सीयभाषायामपि अनुवादोऽभूत् । ततः १८०१– ख्रिस्टवर्षे औपोखत (oupnekhat) नाम्ना ल्याटिनभाषायामपि अनुवादो विहितः । पाश्चात्त्यविद्वत्सु अनुसन्धातृषु चोपनिषदां सार्वजनीनतोदात्तयोः

---

१४. तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

– श्वेताश्वतरोपनिषद् ६।१२

प्रभावः क्रमशो व्यापृतः। अत्र सुप्रसिद्धो जर्मनीदेशीयो विद्वान् अर्थर-शोपेनहर (Aurther Schophenhar 1988-1860) शेलिङ (Scnelling), मेक्समूलर (Maxmuller) चेति बहवो विद्वांसः समायान्ति। एतत् सङ्क्षेण प्रारम्भे उल्लिखितमेवास्ते।

ज्ञानं साधारणतया प्रातिभासिकं, व्यावहारिकं पारमार्थिकञ्चेति कृत्वा त्रिभागे विभक्तुं शक्यते। प्रातिभासिकज्ञाननाम रज्वां दृष्टं सर्पस्य ज्ञानं स्वप्नसंसारश्च । एतज्ज्ञानद्वयमसत्यं मिथ्यामयं मायिकञ्च । प्राणिना जन्मतो मृत्युपर्यन्तं भोक्तव्यः प्रारब्धकर्मजन्यसुखदुःखादिमिश्रितसंसारो व्यावहारिकज्ञानं यन्मिथ्या चोच्यते । प्रत्येकं प्राणिनः पञ्चभूतात्मकस्थूलशरीरं मातुर्गर्भे प्रवेशनपूर्वमपि नासीन्मरणानन्तरमपि न स्थास्यति । अभूतपूर्वो भविष्यति चासम्भवः परं मध्ये ईषद्दृष्टपदार्थो [१५]माण्डूक्यकारिकायां 'वितथः' इत्युदीरितो वर्तते। एवं प्रातिभासिकं क्षणिकं वा ज्ञानमसदुच्यते चेद् व्यावहारिकज्ञानं व्यावहारिकसद् वा वेदान्तस्य भाषायां मिथ्या निगद्यते। परं पारमार्थिकज्ञानं पारमार्थिक सद् [१६]वावाधितरूपेण त्रिष्वेव कालेषु अक्षुण्णरूपेण विराजते यदेकमात्रमद्वितीयपरमात्मपरब्रह्म प्रोच्यते।

उपनिषदां ज्ञानेन विनोपनिषद्वेद्यस्य पुरुषस्य ज्ञानमसम्भवम् । एतदर्थं ब्रह्म [१७]'औपनिषदपुरुषः' कथ्यते । साक्षिणो रूपेण अनवरतमवस्थितोऽस्ति । बुद्धेर्वृत्तौ प्रतिबिम्बितबिम्बरूपसाक्षिणः

---

१५. आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा।
वितथैः सदृशाःसन्तोऽवितथा इव लक्षिताः ।।– माण्डूक्यकारिका २।६

१६. त्रिकालाऽवाध्यत्वं सत्यत्वम्। – वेदान्तसन्दर्भ

१७. तं त्वौपनिषदं पुरुषं पृच्छामि तं (त्वा त्वं विद्याभिमानिनं पुरुषम्) चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यति।

प्रतिबिम्ब एव जीवः । ततो निकटे शरीरप्राणेन्द्रियादयो न केऽपि भवितुमर्हन्ति । तस्यैव सच्चितिं लब्ध्वा प्राणी प्राणीवान् वर्तते । तस्य प्राणस्यैव कारणेन जीवात्मा प्राणी प्रोच्यते । यथा जडपार्थिवमृत्तिकोपादानकारणभूतजडघटो विनाशान्मृत्तिकायामेव विलीयते तथैवात्माभावे स्थूलशरीरं शवो जडश्च भवति, पञ्चमहाभूतस्य तत्तदुपादानकारणमेत्य एतच्छरीरस्य घटकतत्त्वानि विलीनतां प्रयान्ति ।

प्राणिनः स्थूलं सूक्ष्मञ्च शरीरद्वयमेव मायिकतत्त्वेन निर्मितो जडपदार्थः । किन्तु चेतनात्मकोऽध्यासात्मकसम्बन्धेनात्मनः संसर्गाध्यासस्य कारणेन वा प्राणिनो जडशरीरमपि चेतनवद् भूत्वा चेष्टते । वस्तुतः पाञ्चभौतिकशरीरं पृथ्व्या विकार एव । शिलामृच्छरीरेषु नास्ति किञ्चित् पार्थक्यम् ।

सम्पूर्णाश्चराचरपदार्थाः सदैव पृथिव्या एवोत्पद्यन्तेऽन्ते च पृथिव्यामेव निलीयन्ते । केवलं क्रिया भेदस्य कारणेन नानानामानि सङ्केत्य व्यवहारो विधीयते । एतत् सर्वं मिथ्यैव आत्मा, ब्रह्म चित्तत्त्वमेव सत्यम् । एतदर्थमात्मचिन्तनात्मानुभूतिब्रह्मानुभूतिः कर्तव्या ।

आत्मज्ञानमात्मसाक्षात्कारो वा नैकविधानि साध्यसाधनानि तेषां सम्बन्धदर्शकशास्त्राणि च पठित्वा श्रुत्वा चैव न सम्भवति । केनचिद् विशिष्टोद्देश्येन लक्ष्येण च विना बहुविधानां वक्तृणां प्रवचनश्रवणेनानुचितसाहित्यशास्त्राणां पठनेन चात्मज्ञानं न भवति । यतो हि शब्दमात्रं पठित्वा कण्ठस्थीकृत्य ब्रह्मसाक्षात्कारो दुर्लभः । एतदर्थमुपनिषदां निर्देशनानुसारेण श्रवण–मनन–निदिध्यासनकर्माणि सम्पाद्यौपनिषद्ज्ञानं मुमुक्षुणात्मसात्कृत्य स्वस्य स्वभाव एव निर्मातव्योऽन्यथा बाह्याडम्बरसङ्कल्पज्ञानेन मोक्षप्राप्तिरसम्भवा ।

किं बहुना, तथाविधेनाल्पचिन्तनेन कामनैषणामोहकामक्रोधादिदुर्गुणानां परिमार्जनं भवति न चान्तःकरणं शुद्धिमेति । अत एव ब्रह्मसाक्षात्काराय सर्वाणि शास्त्राणि कण्ठस्थीकृत्य प्रवचनानि विधाय बहु पठित्वा पाठयित्वा च वाणीजा मायिकप्रपञ्चा विस्मर्तव्या एव भवन्ति ।

[१८]नायमात्मा प्रवचनेन वेदाध्ययनेन धारणाशक्तिं सातिशयं बलवतीं विधाय च लभ्यः । बहुशास्त्रश्रवणादपि ब्रह्मसाक्षात्कारः सुदुर्लभः । यो मुमुक्षुर्ब्रह्मसाक्षात्कारस्य दृढनिश्चयेनोपनिषदां मार्गमनुसृत्य श्रोत्रियब्रह्मनिष्ठगुरोः स्वस्यैव वेदशाखाया महावाक्यस्य श्रवणमनननिदिध्यासनानि विदधाति स एव तस्य साक्षात्करणे समर्थः । सर्वैः कर्मभिः सर्वाभिरेषणाभिश्च निर्मुक्ताय मुमुक्षवे एव ब्रह्मसाक्षात्कारः सुकरः । यस्य मुमुक्षोऽन्तःकरणमत्यन्तनिर्मलं स्वच्छं सूक्ष्मञ्चास्ते तत्रैव ब्रह्म स्वस्यात्यन्तस्य निर्मलस्य स्वच्छस्य सूक्ष्मस्य च स्वरूपस्य मायातीतसर्वव्यापिप्रकाशस्य वा प्रतिफलनं कारयति ।

सारल्येन ब्रह्मसाक्षात्कारः कथं न सम्भवतीति विषये श्रुतिर्निर्दिशति [१९]परमात्मना क्रोधवशाद् जीवात्मनः श्रवणादिज्ञानेन्द्रियाणि बहिः प्रत्यावर्तितानि, इत्यतो जीवोऽसौ स्वस्याभ्यन्तरेऽन्तः करणाभिमुखी भूत्वा आत्मानं द्रष्टुं शक्नोति । असौ बहिर्मुखी भूत्वा तत्रत्यान् मायिकमिथ्याविषयानेव पश्यति । श्रुतिरेतदपि प्रतिपादयतिअन्ते मुक्तेः प्रबलेच्छया यत्नरतो यो मुमुक्षुः स्वस्य बहिर्मुखिज्ञानेन्द्रियाणि

---

१८. नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूंस्वाम् ॥
– कठोपनिषद् १।२।२३

१९. पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ – कठोपनिषद् २।१।१

अन्तर्मुखीकृत्य अभ्यन्तरे स्वस्यैव बुद्धिवृत्तौ सदैव विराजमानं प्रत्यगात्मानं चिन्तयति तादृशो धीरपुरुष एवात्मसाक्षात्काराय प्रभवति।

श्रवणमनननिदिध्यासनशमदमाद्यन्तरङ्गसाधनैरपि बुद्धिमान् मुमुक्षुरहर्निशं ब्रह्मचिन्तनं कुर्यादन्येषां बहुप्रकारकाणां शास्त्राणामनुध्यानमनुचिन्तनं वा न विदध्यात् । केवलात्मानं [२०]ॐ द्वारा ध्यायेत् । अन्यानि [२१]व्यर्थवचांसि परित्यजेत् । यतो हि बहूनां शब्दानामनुध्याननाम [२२]वाण्या दुरुपयोगः, कार्यमेतद् व्यर्थमिति श्रुतिरुद्घोषयति।

यस्य कस्यापि शास्त्रस्य [२३]आचार्याद् गुरोर्वा श्रवणं पठनं वाऽऽवश्यकमन्यथा शास्त्रं ज्ञातुं न शक्यते । ततोऽपि वेदान्तशास्त्रन्तु गुरोरेव गुरुमुखी भूत्वा श्रोतव्यमिति श्रुतिनिर्देशः । न तु एतदेवौपनिषद्पुरुष वोपनिषद्वेद्यं ब्रह्म ज्ञातुं प्रथमतः श्रोत्रियब्रह्मनिष्ठगुरोर्विधिपूर्वकमुपनिषदः श्रोतव्याः पठितव्याश्चान्यथा वेदान्तज्ञानेन विना शास्त्रार्थकर्मणि प्रवृत्तौ सत्यां शाकल्यस्य नियतिर्भोक्तव्या भवति। एतत्सम्बन्धे आचार्यः शङ्करः स्वभाव्ये विलिखति – यो भगवतो नारायणात् प्रचलितमद्वैतवेदान्तस्य शास्त्रीयपरम्परां सम्प्रदायानुसारेण गुरुमुखी भूत्वा वा उपनिषदो नाधीते स सर्वेषां शास्त्राणां ज्ञाता सन्नपि [२४]मूर्खवदुपेक्षणीयः ।

---

२०. ओमित्येवं ध्यायथ आत्मानम्। – मुण्डकोपनिषद् २।२।६

२१. अन्या वाचो विमुञ्चथ। – मुण्डकोपनिषद् २।२।६

२२. तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत्॥ – बृहदारण्यकोपनिषद् ४।४।२१

२३. आचार्यवान्पुरुषो वेद। तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ सम्पत्स्ये।
– छान्दोग्योपनिषद् ६।१४।२

२४. असम्प्रदायवित् सर्वशास्त्रविद् अपि मूर्खवद् एव उपेक्षाणीयः ।
– श्रीमद्भगवद्गीता, शाङ्करभाष्य १३।२

स्वशास्त्रीयपरम्पराया अनुसारेणोपनिषच्छास्त्रस्य ज्ञानेन विना ब्रह्मसाक्षात्काराभावो निर्विवादः । एतस्यैव परिपूर्तये सूत्रात्मकरूपेण 'उपनिषत्कारिका' नामकोऽयं ग्रन्थः गुरुशिष्यसंवादात्मकरूपेण [२५]चूर्णकशैल्यां प्रणीतः । अस्य ग्रन्थस्य प्रणयनात् प्राग् एतस्यैव भूमिकायाः पृष्ठभूमेर्वा रूपेण कतिचिद्वर्षाणामन्तराले नेपालीभाषायां विभिन्नानां महत्त्वपूर्णानां गद्यात्मकपद्यात्मकग्रन्थानामनुवादकार्यं सम्पन्नम् । गद्यात्मकग्रन्थेषु 'अद्वैतसिद्धि, अध्यास चतुःसूत्री, अध्यास, ब्रह्मसूत्रसार, उपनिषत्सार, वेदान्तपरिभाषासार' च सन्ति । पद्यात्मकेषु 'ज्ञान र भक्ति', रासपञ्चाध्यायी, मणिरत्नमाला, श्रीकृष्णाय वयन्नुमः, अन्तिम उपदेश, अजातवाद, अपरोक्षानुभूति, श्रीमद्भागवतमहापुराणको अवतरणिका, अष्टावक्रगीता' च वर्तन्ते । संस्कृतभाषायां 'सङ्क्षेपशारीरकसारः' ग्रन्थस्य च प्रणयनं विहितमस्ति ।

२०१७ विक्रमाब्दत एवाद्वैतवेदान्तदर्शनस्य विद्यार्थी समभवम्, अस्य दर्शनस्यान्तिमलक्ष्यं मोक्षो ब्रह्मसाक्षात्कारो वेति ज्ञानञ्च प्रापमित्यतोऽपिअत्रलेखनीचालिता।एतस्मिन्सन्दर्भेब्रह्मसाक्षात्कारस्य साधनस्य रूपेण षण्णिबन्धग्रन्थान् प्राणयम् । ब्रह्मसाक्षात्कारस्य परम्परया साधनस्य रूपेण तदनुरूपं नामसादृश्यप्रथमनिबन्धग्रन्थः 'ब्रह्मसाक्षात्कार' प्रणीतः । 'ब्रह्म' साक्षात्कार चेति शब्दाभ्यां निष्पन्नः ब्रह्मसाक्षात्कार मायिकसाधनैर्बाह्यान्तरैरिन्द्रियैर्वा न सम्भव इत्यत एतदपरोक्षतयानुभाव्यं तत्त्वम् । यतो हि ब्रह्मतत्त्वं त्रिष्वेव कालेषु विद्यमानं पारमार्थिकसत्यं परमसत्यं वा । एतदेव परमसत्यं बोधयितुं द्वितीयो निबन्धग्रन्थः 'परमसत्य' विरचितः । एतत् परमसत्यमौपनिषत्प्रमाणैः स्पष्टयितुं ब्रह्मविद्या विसृष्टा । ब्रह्मज्ञान

२५. अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः । – महाभाष्यम्

पराविद्यामात्रेण सम्भवतीति सत्यं संसाधयितु चतुर्थनिबन्धग्रन्थस्य नामकरणं [२६]'पराविद्या' विहितम् । ब्रह्मणोऽक्षरब्रह्मणोर्वा ज्ञानाय गुरुमुखी भूत्वा श्रवण, मनन, निदिध्यासनैस्सह ब्रह्माभ्यासः कर्तव्यः । एतदर्थ पञ्चमनिबन्धग्रन्थः 'औपनिषद पुरुष' जिज्ञासुमुमुक्षूणां पुरतः पुरस्कृतः । एतस्मिन् ग्रन्थे उपनिषदां ज्ञानेन विना ब्रह्मज्ञानिनोर्धृष्टतां प्रदर्शयतः शाकल्यस्य पतनं प्रदर्श्य औपनिषदज्ञानस्य महत्त्वं प्रख्यापितमस्ति ।

षष्ठोऽन्तिमो वा ग्रन्थः 'ऋते ज्ञानान्न मुक्तिः' अत्र वेदान्तज्ञान-स्यौपनिषदज्ञानस्य वा [२७]साक्षान्मुक्तेर्हेतुभूतस्य स्ववेदशाखाया महावाक्यस्य श्रवणमनिवार्यमिति नैकविधाभिर्युक्तिभिः सम्यक् प्रतिपादितम् । एतेषामनूदितानां निबन्धवर्गस्य च ग्रन्थानां सारसङ्ग्रहो ब्रह्मज्ञानेन विना ब्रह्मसाक्षात्काराभावस्य परमसत्यञ्च ऋते ज्ञानान्न मुक्ति, इत्यभिधाने ग्रन्थे सन्दर्शिते स्तः ।

पूर्वस्मिन्समये २०६७ वैक्रमाब्दे मया प्रणीतः उपनिषत्सारः नाम्नो ग्रन्थः । त्यस्यैव परिवर्धितरूपेयं उपनिषत्कारिका । तथा च, उपर्युक्तानां सम्पूर्णानां ग्रन्थानां सारसङ्ग्रहो निष्कर्षो वा सूत्ररूपेण एतदीये उपनिषत्कारिका ग्रन्थे प्रकाशितो वर्तते । अहं सूत्रात्मकग्रन्थं बोद्धुमाकरग्रन्थविवरणग्रन्थप्रकरणग्रन्थप्रभृतिविभिन्न-ग्रन्थानां सारसङ्ग्रहस्य रूपेण सङ्ग्रथितानामनुदितनिबन्धग्रन्थानां ज्ञानमावश्यकम् । ग्रन्थोऽयं जिज्ञासुमुमुक्षूणां कृते भूयो भूय आवृत्तेः सुगमतायै चापि निर्मितोऽस्ति यच्छास्त्रार्थमुदाहरणस्य रूपेण पादटिप्पण्यां प्रदत्तं वर्तते ।

सारवच्छुभाशंसायाः कृते महेश-संन्यासाश्रमस्य पीठाधीशवर्याय

२६. अथ यया तदक्षरमधिगम्यते । – मुण्डकोपनिषद् १।१५
२७. साक्षान्महावचनमेव विमुक्तिहेतुः । – सङ्क्षेपशारीरकम् ३।२९५

सम्मान्यायाऽष्टोत्तरसहस्रश्रीविभूषिताय स्वामि-रमणानन्द-गिरिवर्याय हार्दं कार्तज्ञमभिव्यनज्मि । अस्योपनिषत्कारिकायाः सुललितया संस्कृतवाण्यानुवादेन संस्कृतकृतित्वसम्पादकाय प्राध्यापकाय विद्या-वारिधिपदसमलङ्कृताय लक्ष्मीकान्तवर्याय हार्दीं कृतज्ञतां विनिवेदयामि ।

मनोयोगेन ग्रन्थमिमं पठित्वा विद्वत्तापूर्णायाः सम्मतेः प्रदात्रे प्राध्यापकाय भवानीप्रसाद-खतिवडावर्याय च हार्दान् धन्यवादान् वितरामि । एवञ्च कारिकाग्रन्थमिमं सम्यगधीत्य वैदुष्यभावयित्रीं सम्मतिं प्रदाय ग्रन्थस्यास्य सम्पादनकार्यार्थञ्च दत्तावधानमुपप्राध्यापकं रोहिणीराज-तिमिल्सिनावर्यं प्रति हार्दिकमाभारं प्रकटीकरोमि । ग्रन्थस्यास्य सम्पादनायैव सहायाय उपप्राध्यापकाय नेत्रप्रसादा-धिकारिवर्याय, विभुप्रसादार्यालवर्याय, तथैव सङ्गणक उट्टङ्कनादि-कार्येण प्रकाशनयोग्यत्वसाधकाय खड्गप्रसाद-खनालवर्याय च हार्दिकान् धन्यवादान् प्रयच्छामि । ॐ ब्रह्मार्पणमस्तु ।

२०७९ वैशाखः १३

विनीतः
(सहस्रचन्द्रदर्शनस्य पूर्णतायाः सुदिनम्)
शरत्कुमार-भट्टराई

# उपनिषत्कारिका

## विषयसूची



❁

ॐ

तत्सद्ब्रह्मणे नमः

# उपनिषत्कारिका

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

ग्रन्थकारकर्तृकमङ्गलाचरणम् –

यस्मिन् विवर्तितं विश्वं यस्मिन्नेव च संस्थितम् ।
यस्मिन्नेव प्रलीयेत तस्मै विश्वात्मने नमः ॥१॥

वन्दे सद्भक्तियुक्तोऽहं गणनाथं गजाननम्
लेखने शक्तिरायातु सद्बुद्धिः शुभभावना ॥२॥

सरस्वति ! जगन्मातर्बुद्धिं मे कुरु निर्मलाम्
पराविद्या त्वमेवाऽद्य मेधाशक्तिं प्रवर्द्धय ॥३॥

अनुवादकर्तृकर्मङ्गलाचरणम् –

गुरुरेव गतिर्गुरुमेव भजे
गुरुणैव सहाऽस्मि नमो गुरवे ।
न गुरोः परमं शिशुरस्मि गुरो–
र्मतिरस्ति गुरौ मम पाहि गुरो ! ॥४॥

गणेशो नः पायात् प्रणमत गणेशं जगदिदं
गणेशेन त्रातं, नम इह गणेशाय महते ।
गणेशान्नाऽस्त्यन्यत् त्रिजगति गणेशस्य महिमा
गणेशे मच्चित्तं निवसतु गणेश ! त्वमव माम् ॥५॥

श्रीरामोऽस्तु सदा मम प्रियतमो रामं भजे सर्वदा
रामेणैव सुरक्षितं जगदिदं रामाय तस्मै नमः ।
रामाद् दिव्यतमो न हि त्रिभुवने रामस्य कार्यं महत्
रामे चित्तलयो ममेह भवताद् राम ! त्वमेवाश्रयः ॥६॥

ओङ्कारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।
कामदं मोक्षदञ्चैव ओङ्काराय नमो नमः ॥७॥

चिदात्मने प्रपूर्णाय तस्मै शून्यात्मने नमः ।
ब्रह्मणे कंस्वरूपाय खंस्वरूपाय ते नमः ॥८॥

सद्गुरुं प्रथमं वन्दे श्रीरामं तदनन्तरम् ।
गुरुः पापात्मनां त्राता श्रीरामस्त्वमलात्मनाम् ॥९॥

श्रीभीमकान्तं जनकं शिवात्मकं
श्रीनीलमायां जननीं शिवात्मिकाम् ।
लक्ष्म्यादिकान्तोऽस्मि गणेशवत्तयोः
प्रदक्षिणीकृत्य नमामि पादयोः ॥१०॥

## अथ ग्रन्थारम्भः

पूर्वार्धम् –

प्रशान्त आश्रमश्चैक आसीत् स्वर्मस्तकान्तिके
ब्रह्मज्ञस्य गुरोस्तत्र रम्यं वनमधित्यका ॥११॥

वेदवेदाङ्गपाठार्थे शिष्या आसन्ननेकशः ।
तेषां मेधाविनश्छात्रा वेदान्तं शीलयन्त्यपि ॥१२॥

तेषामेकोऽभवच्छिष्यः सद्गुरोः प्रियदर्शनः ।
पठन्नद्वैतवेदान्तं जिष्णुवद् द्रोणसन्निधिम् ॥१३॥

युवत्वे विस्मृतिर्जाता पठन् विस्तरतोऽपि सः ।
अनभ्यासवशात् सोऽभूद् वेदान्तेषु बहिर्मुखः ॥१४॥

गतः कालः कियान् तस्य शक्तिसम्पत्तिसञ्चये ।
अभीप्सितां लब्धवान् स न तु शान्तिमवाप्तवान् ॥१५॥

तदाऽऽत्मीयं धनं हित्वा बाह्यं धनमवाप्तवान् ।
सम्पत्तिर्भौतिकी प्राप्ता परं खिन्नं मनोऽभवत् ॥१६॥

शान्तेस्तु शाश्वतं धाम संसारे क्व मिलेदिह ।
प्राप्यते यत्र विश्रान्तिर्गम्यं तद्धाम निश्चितम् ॥१७॥

अप्राप्य शान्तिमन्यत्र सोऽस्मरत् पाठकं गुरुम् ।
पश्चात्तापोऽभवत्तस्य निवृत्तः स्वगुरुं प्रति ॥१८॥

स्वगुरोः सन्निधिं प्राप्याऽकरोत् पादाभिवन्दनम्
भूत्वा विनम्रोऽप्यवदत्–'पश्चात्तापमभूद् गुरो !' ॥१९॥

तदन्तरा किमभवत् संवादे गुरुशिष्ययोः ।
तत्सारांशं लिलिखिषुः किं किं स्फुरति मानसे ॥२०॥

शिष्यः –
विप्रवंशेऽभिजातोऽहमज्ञ एवाऽभवं गुरो !
मम बुद्धिरभून्मन्दा ह्यज्ञानं भरितं मयि ॥२१॥

पठन्नितोऽभवं दूरं स्वगृहान्त उपागमम् ।
स्वस्थानादभवं दूरं स्वात्मज्ञानाद् बहिर्मुखः ॥२२॥

गतं वयोऽभवं वृद्धः क्रमाद् भयमुपागतम् ।
त्रिःशुक्लयुक्तजन्माऽपि वेदान्तो विस्मृतिं गतः ॥२३॥

प्राप्यापि स्वगुरोः पत्रं नाऽपठं तदुपेक्षितम् ।
अलिखं बहुपत्राणि नात्मार्थं तानि कारणम् ॥२४॥

मानसे त्वस्मिताऽऽयाता तयाऽहङ्कारगर्वितः ।
स्वात्मज्ञानमभूद्दूरमहन्ता मां निराकरोत् ॥२५॥

अधुनाऽज्ञानवानस्मि भवच्छरणमागतः ।
मिथ्यादृष्टेर्निवृत्तोऽहं क्षमस्व मे व्यतिक्रमम् ॥२६॥

अवाच्यवादानवदं शिष्टाचाराः सुविस्मृताः
अपमानः कृतस्तेऽपि क्षमस्व मे व्यतिक्रमम् ॥२७॥

अशिष्टोऽहमसभ्योऽहमज्ञानी मां क्षमस्व भो !
क्षमस्व ब्रह्मनधुना मम सर्वं व्यतिक्रमम् ॥२८॥

प्रत्यावृत्तो गुरुकुले भवच्छरणमागतः ।
ज्ञानं ददातु मह्यं भो ! क्षमस्व मे व्यतिक्रमम् ॥२९॥

गुरुः –
समागतोऽसि हे तात ! स्मृत्वा त्वमिममाश्रमम् ।
कुरु भव्यमितः कर्म भूतं विस्मर त्वत्कृतम् ॥३०॥

विस्मर्तव्या दुराचारा मिथ्याचाराः सदैव हि ।
अज्ञानजन्यास्ते सर्वे हेयास्तुच्छाश्च मायिकाः ॥३१॥

दूरीभूतः सतां सङ्गो मिथ्याचारः कृतस्त्वया ।
सद् वस्तु ते दूरमभूदसद्वस्तुगतं मनः ॥३२॥

अतद्वस्तूनि स्वीकृत्य हेयं तद्वस्तु संस्मृतम् ।
विस्मृत्य नित्यमात्मानं दुर्भाग्यं तत् परं मतम् ॥३३॥

अहमाकर्षितस्तात ! तव जिज्ञासयाऽधुना ।
ज्ञातव्यं स्वस्वरूपं हि जगन्मिथ्येति संस्मर ॥३४॥

अहंवादी न भूयास्त्वमनूचानः कदाचन ।
सुशीलः सर्वदा भूया आत्मज्ञाने दृढो भव ॥३५॥

पूर्वं यल्लिखितं पत्रे तदेवमधुना स्मर ।
तदेव तत्त्वमद्यापि प्रवदाम्यवधारय ॥३६॥

यद्यप्यहं न जानामि ब्रह्मतत्त्वं यथार्थतः ।
कुर्वे प्रयासं हे वत्स ! यथा ज्ञानं सनातनम् ॥३७॥

क्वाऽहमज्ञोऽस्मि संसारी क्व वेदान्तः सुदुस्तरः ।
जानाति सम्यग् ब्रह्मज्ञः क्वाऽहमल्पज्ञभूसुरः ॥३८॥

आचार्यस्येश्वरस्यापि मिलेन्मां यद्यनुग्रहम् ।
वदिष्यामि यथाशक्ति सूक्ष्मं तात्पर्यमर्थतः ॥३९॥

विप्रेण पठनीयं हि वेदवेदाङ्गमर्थतः ।
वेदान्तबोधे तत्पश्चानूमार्गो मिलति शास्त्रतः ॥४०॥

त्रिःतत्त्वमाप्तुं कठिनमीश्वरस्य कृपां विना ।
मनुष्यत्वं मुमुक्षुत्वं ब्रह्मज्ञस्य गुरोः कृपाम् ॥४१॥

गृहीत्वा मानवं जन्म ब्रह्मज्ञानी भवेन्न चेत् ।
तमात्महा श्रुतिर्ब्रूते निश्चितं स तु पामरः ॥४२॥

उद्धरेदात्मनाऽऽत्मानं कर्तव्यमिह निश्चितम् ।
अन्यथा तस्य नोद्धारो वेदो वदति निश्चितम् ॥४३॥

त्रिदोषा जन्मतः सन्ति मानवान्तर्मनःस्थिताः ।
तौ द्वौ तु मलविक्षेपौ ततश्चाऽऽवरणं तथा ॥४४॥

कर्म कार्यं चित्तशुद्ध्यै मोक्षार्थं नैव कर्म तत् ।
विचारेण भवेन्मोक्षो न मोक्षः कर्मणा भवेत् ॥४५॥

मलदोषो भवेद्दूरं निष्कामेनैव कर्मणा ।
भक्त्या क्षयति विक्षेपं मोक्षं सज्ज्ञानतो मिलेत् ॥४६॥

गुरूपदेशात् क्षयति रज्जौ सर्प इव भ्रमः ।
योगादिस्नानदानादिकर्मणा नैव स क्षयः ॥४७॥

अधिकारी भवेन्नित्यं ज्ञानार्थे तं विना न हि ।
विना देशकालयोगैः सहकारी तथा भवेत् ॥४८॥

जिज्ञासुरेकलोऽपीह समुपासीत सद्गुरुम् ।
प्रकुर्याद् ब्रह्मजिज्ञासां विनीतो गुरुसन्निधिम् ॥४९॥

प्रतिक्षणं प्रतिदिनमात्मज्ञानार्थमेव हि ।
विचक्षणोऽस्तु मेधावी जिज्ञासुर्गुरुसन्निधिम् ॥५०॥

ज्ञानार्थं प्रथमं विन्देत् साधनानां चतुष्टयम् ।
कार्यं नित्याऽनित्यवस्तुविवेकस्यैव चिन्तनम् ॥५१॥

इह पुत्रकलत्रादिसम्पत्तेर्भोगतुच्छताम् ।
इतो गतेऽपि स्वर्गीयसुखादौ स्याद् विरागताम् ॥५२॥

शमादिषट्कसम्पत्तौ चतुर्थी स्यान्मुमुक्षुता ।
शमादयस्तु ज्ञानार्थे साधनानि भवन्ति हि ॥५३॥

वैराग्यत्वं मुमुक्षुत्वं भवेतां तीव्रसाधने ।
शमादिषट्कसम्पत्तिर्मोक्षसाधनमिष्यते ॥५४॥

वैराग्यत्वं मुमुक्षुत्वं यस्मिन् कर्तरि नैव ते ।
शमादिषट्कसम्पत्तिः सर्वा स्यादेव निष्फला ॥५५॥

मोक्षसाधनमध्ये तु मुख्या भक्तिर्निगद्यते ।
स्वस्वरूपानुसन्धानमेव भक्तिरिहोच्यते ॥५६॥

कर्ता स्यादात्मजिज्ञासुश्चतुःसाधनयुग् यदि ।
गुरूपसत्तिः कर्तव्या ब्रह्मज्ञगुरुसन्निधिम् ॥५७॥

आत्मनः शरणापन्ने शिष्ये ज्ञानार्थिने गुरुः ।
ब्रह्मोपदेशं कुरुते यदि स्यात् करुणानिधिः ॥५८॥

चतुःसाधनयुक्तोऽसि नैव बिभ्यति त्वद्विधाः ।
अत्यन्तमुपयुक्तोऽसि सद्ब्रह्मज्ञानसिद्धये ॥५९॥

उपायं निर्दिशन्नस्मि संसारभयनाशनम् ।
आनन्दः प्राप्यते यस्मात् संसारात् प्रतरिष्यसि ॥६०॥

वेदान्तशास्त्रपठनाद् ब्रह्मज्ञानमुदेति हि ।
संसारस्य महद्दुःखं यस्माद् दूरं भविष्यति ॥६१॥

श्रद्धाभक्ती ध्यानयोगौ साधनानां चतुष्टयम् ।
एतैर्मोक्षो मिलत्येव बन्धनानि क्षयन्ति हि ॥६२॥

शिष्यः –

अहमत्यन्तमज्ञानी संसारोऽस्ति सुदुस्तरः ।
कथं पारं तरिष्यामि ह्यज्ञानेन विमोहितः ॥६३॥

यौवने मदमत्तोऽस्मि सदा ज्ञानबहिर्मुखः ।
वर्षीयानभवं चाद्य गुरोः शरणमागतः ॥६४॥

मृत्युरग्रे समायातो भयो यमभटैर्हि माम् ।
गुरो ! निर्दिशतूपायं निर्भयः स्यामहं कथम् ॥६५॥

गुरुः –
अथातो ब्रह्मजिज्ञासां कुरुष्वैकाग्रचेतसा ।
श्रोत्रियं ब्रह्मनिष्ठं त्वमुपासीथा गुरुं प्रति ॥६६॥

दुर्लभं मानुषं जन्म विप्रत्वमतिदुर्लभम् ।
पौरुषं दुर्लभं तत्र विद्याप्राप्तिः सुदुर्लभा ॥६७॥

प्रतिभावान् त्वमस्यत्र संसाराऽऽसारबुद्धिमान्
आत्माऽनात्मानयोः सम्यग् विवेकं कुरु नित्यशः ॥६८॥

ब्रह्मज्ञानं दुर्लभं स्याद् गुरोः सन्निधिमाश्रय ।
अनेकजन्मजैः पुण्यफलैर्मुक्तो भविष्यसि ॥६९॥

शिष्यः –
किमस्ति बन्धनं कस्मात् ? कथं मुक्तिर्मिलिष्यति
आत्माऽनात्मा किमेतौ द्वौ विवेकः कथमुद्भवेत् ? ॥७०॥

गुरुः –
पवित्रं ते कुलं चाद्य धन्योऽसि ज्ञानवानसि ।
सुबुद्ध्या ब्रह्मजिज्ञासुरज्ञानात् पारमेष्यसि ॥७१॥

ऋणात्तु पारमायान्ति परमज्ञानमोचनम् ।
स्वयमेव प्रकर्तव्यमात्मज्ञानेन नान्यथा ॥७२॥

अविद्याकामकर्माणि क्षेपणीयानि चात्मना ।
अन्यथा न विनश्यन्ति कुरुष्वात्मविचिन्तनम् ॥७३॥

शिष्यः –
संस्कारः कीदृशः प्राप्तः पूर्वजन्मनि मानवः ।
ब्रह्मज्ञानं भवेद् येन ज्ञानं दिशतु तद् गुरो ! ॥७४॥

गुरुः –
प्रज्ञाविद्याकर्मभिश्च साकं गुरुकृपा भवेत् ।
एतैश्चतुर्भिः संयुक्तो ज्ञाननिष्ठो भवेन्नरः ॥७५॥

भवेदात्मकृपा यस्मिन् तस्मिन् स्याद् गुर्वनुग्रहः ।
शास्त्रप्रसादोऽपि भवेदीशानुग्रहतो मिलेत् ॥७६॥

प्रारम्भे पठनीयं स्याद् वेदवेदाङ्गतो हि सत् ।
ततश्चौपनिषज्ज्ञानं विजिज्ञास्यं विशेषतः ॥७७॥

शास्त्राणि किं निर्दिशन्ति श्रेयःप्रेयौ विशेषतः ।
श्रेयःप्रेयादपि वरं कल्याणं स्याद् यतोऽन्त्यतः ॥७८॥

द्विविधानि हि शास्त्राणि नित्यं कृतकमेव च ।
वेदोपनिषदो नित्या ज्ञेया मन्वादयस्ततः ॥७९॥

शिष्यः –
एकपक्षे तु सद्ब्रह्म ह्यस्ति पक्षान्तरे त्वसत् ।
ब्रह्मन्निदं प्रवदतु चाध्यासः संभवेत् कथम् ? ॥८०॥

श्रुतो मया विवर्तोऽपि वेदान्तमत एव हि ।
ज्ञानं विवर्तस्य कथं तन्मे संश्राव्यतां गुरो ! ॥८१॥

गुरुः –

न बुध्येत यदाऽध्यासं वेदान्तो नैव बुध्यते ।
यदाऽध्यासो बुध्यते चेद् वेदान्तो बुध्यते तदा ।।८२।।

यद् वस्तु यत्र नास्त्येव तत्र तद् दृश्यते यदि ।
रज्जौ सर्पभ्रमःस्याच्चेत् तदाऽध्यासस्तदेव हि ।।८३।।

जडात्मकं जगदिदं चैतन्यं मन्वते जनाः ।
जीवान्माऽहमिति भ्रान्तिं देहेऽपि मन्वते जनाः ।।८४।।

वेदान्तसूत्रभाष्ये त्वमुपोद्घातं प्रबुध्यसे ।
प्रस्थानत्रयमध्ये चेत्तदाऽध्यासः प्रबुध्यसे ।।८५।।

'अध्यास'नामा ग्रन्थोऽपि पठितुं शक्यते त्वया ।
पठिष्यसि यदा चेत् तं तदाऽध्यासं प्रबुध्यसे ।।८६।।

विवर्तज्ञानजिज्ञासा यत्कृताऽनुत्तमाऽस्ति सा ।
तदद्वैतमतं तेन सन्देहस्ते निवार्यते ।।८७।।

अतद्वस्तु विना ब्रह्म यदैव स्याद् विवर्तितम् ।
चराचरो दृश्यतेऽत्र विवर्तः स हि वस्तुतः ।।८८।।

विवर्तिते ब्रह्मणि तु चराचरमिदं जगत् ।
सोऽयमेव हि संसारो यदा ब्रह्म विवर्तितम् ।।८९।।

पुनरध्यासचर्चाऽपि तत्प्रसङ्गे भविष्यति ।
विवर्तस्याऽपि चर्चा स्यात्तदा त्वमवधारय ।।९०।।

जिज्ञासा ते विशेषा चेच्छङ्करस्य मतं पठ ।
इतः सङ्क्षेपशारीरं ग्रन्थं चाऽप्यवधारय ।।९१।।

शिष्यः –

निषेध्यो दृश्यसंसार आत्मा किन्त्वनिषिध्यते ।
निषेधाज्जायते चान्यः प्रतियोगी न संशयः ॥९२॥

यदि स्यात् प्रतियोगी तदद्वयं कथमित्यतः ।
शङ्का मनसि सञ्जाता निःशङ्कः स्यामहं कथम् ? ॥९३॥

गुरुः –

अभावाद्धि तदुत्पत्तिः प्रतियोगी भवेत् स्वतः ।
तन्न्यायस्य मतं ज्ञेयं नैव वेदान्तिनां मतम् ॥९४॥

अभावोऽयमविद्यायाः कार्यं तदनुवर्तते ।
वेदादेशो नेति नेति तद्बाधे तद् भवेदपि ॥९५॥

ज्ञानान्मायाकार्यनाशो ह्यविद्यारूपकारणम् ।
मायानाशो नेति शब्दाज्ज्ञानादेव निवार्यते ॥९६॥

अभावस्य विनाशे तु प्रतियोगी कथं भवेत् ?
बन्ध्या पुत्रस्येव तस्याऽस्तित्वं शून्यं भवेदपि ॥९७॥

तत्कारणादेव ब्रह्म स्वच्छं निर्मलमद्वयम् ।
निषेधादेव तच्छेषं शान्तं निर्भयमद्वयम् ॥९८॥

योगाद्वाऽपि च सांख्याच्च विद्यायाः कर्मणोऽपि तत् ।
मिलेन्नैव ब्रह्मज्ञानान्मोक्षं मिलति सर्वथा ॥९९॥

वैदुष्यपूर्णं पाण्डित्यं व्याख्यानं शास्त्रचिन्तनम् ।
भुक्तये साधनानि स्युः साधनानि न मुक्तये ॥१००॥

नैव ज्ञाते ब्रह्मतत्त्वे शास्त्रपाठो हि निष्फलः ।
यदि ज्ञाते ब्रह्मतत्त्वे शास्त्रपाठो हि निष्फलः ॥१०१॥

शास्त्रेऽपि शब्दजालानि विवादास्तत्र केवलम् ।
जालं विहाय सज्ज्ञानं कर्तव्यं ब्रह्मचिन्तनम् ॥१०२॥

अज्ञानसर्पसन्दष्टे ब्रह्मजिज्ञासुमानवे ।
ज्ञानमेवौषधं बोध्यं ज्ञानात् कैवल्यमाप्यते ॥१०३॥

ब्रह्मज्ञानान्नाशमेति दृश्यं वस्तु बहिः स्थितम् ।
शब्दानां रटनान्मुक्तिर्न स्याद् दृश्यं न नश्यति ॥१०४॥

शिष्यः –
गुरो ! बोद्धुमशक्यं तत् सारल्येन ब्रवीतु माम् ।
ममेयं 'ब्रह्मजिज्ञासा' पूर्णं स्यादिति कामये ॥१०५॥

गुरुः –
पठनीयमिदं ज्ञातुं संस्कृतं शास्त्रमेव हि ।
पारिभाषिकशब्दाश्च ज्ञातव्या नात्र संशयः ॥१०६॥

व्याख्या बहुकृतेऽप्येतद् बोद्धुं कठिनमेव हि ।
तवेयं 'ब्रह्मजिज्ञासा' सुष्ठु सत्सङ्गतिं कुरु ॥१०७॥

कठिना विबुधाऽऽख्यातिरात्माऽनात्मविवेचनात् ।
ब्रह्मज्ञानं च कठिनं शास्त्रानुभवचिन्तनात् ॥१०८॥

इत्थं कृते संभवति मोक्षप्राप्तिं परन्त्विदम् ।
ज्ञातव्यं बहुभिः पूर्वजन्मपुण्यफलैरिह ॥१०९॥

अस्थिमांसमये देहे वातपित्तकफैर्युते ।
अहं ममेति यो ब्रूते बन्धनस्यादिकारणम् ॥११०॥

सङ्घातः पञ्चभूतानां स्थूलदेहो विनिर्मितः ।
तद् भोगायतनं यद्वा रोगायतनमेव हि ॥१११॥

जीवोऽस्मिन् धरते देहे फलानि पूर्वकर्मणः ।
दशेन्द्रियैः स भोक्ताऽस्ति फलानीहापि कर्मणः ॥११२॥

चतुरशीतिलक्षेषु जीवात्मा जायते मुहुः ।
पूर्वकर्मफलं भोक्तुमविश्रान्तं यथा कृतम् ॥११३॥

शब्दादिविषये चैके बध्यन्ते हरिणादयः ।[१]
पञ्चज्ञानेन्द्रियैः पञ्च सेवनान्मुच्यते कथम् ॥११४।

विषं तु भुक्ते लगति नान्यथा मुच्यते जनः ।
दृष्टे श्रुते वा भुक्तेऽपि बध्नन्ति विषया इह ॥११५॥

अनासक्तमतिर्भोक्ता विषयादपि मुच्यते ।
आसक्तो बध्यते जीवः सारांशो दर्शनस्य हि ॥११६॥

त्याज्या हि विषयासक्तिर्मुमुक्षुश्चेज्जनः सदा ।
आसक्तबुद्ध्या भोक्ता तु विषयैर्बध्यते ध्रुवम् ॥११७॥

वैराग्यखड्गं गृह्णीयाद् विषयग्राहमर्दने ।
मुमुक्षुश्चेन्निश्चयं स तरति भवसागरम् ॥११८॥

मार्गोऽयं कठिनोऽस्त्येव मृत्युः सर्वत्र बाधते ।
गुरूपदेशतः सत्यं मुमुक्षुः पारमेष्यति ॥११९॥

मोक्षं कामयसे चेत् त्वं विषयान् विषवत् त्यज ।
बाधन्ते विषया नित्यमितः सत्सङ्गतिं कुरु ॥१२०॥

---

१. कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥ (ग.पु.)

त्रोटयित्वाऽज्ञानबन्धानात्मानं सूद्धरेज्जनः ।
अन्यथा त्वाऽऽत्महन्ता स्याद् बुद्ध्या देहात्मयाऽऽवृता ॥१२१॥

देहाऽऽसक्तिं भवेत् तर्हि तन्मृत्योरादिकारणम् ।
मोहं जयति यस्तेन सत्यं मृत्युर्निवार्यते ॥१२२॥

यथा गृहस्थस्य गृहमाश्रयस्थलमुच्यते ।
तथा जीवात्मनो देहो मोक्षार्थं चाश्रयस्थलम् ॥१२३॥

कृशस्थौल्ये जरामृत्यू बाल्यवृद्धौ सुखाऽऽश्रमौ ।
यमादयस्थूलदेहसम्बन्धस्य क्रमा इह ॥१२४॥

कर्मार्थमेव वर्द्धन्ते ज्ञानकर्मेन्द्रियाण्यपि ।
विषयाऽऽसक्तजीवानां तानि स्युर्बन्धकारणम् ॥१२५॥

देहान्तःकरणं चित्तमहं बुद्धिस्तथा मनः ।
चत्वार्येतानि कुर्वन्ति सदा विषयचिन्तनम् ॥१२६॥

एकः प्राणस्तु नित्योऽस्ति कार्याणि कुरुते पृथक् ।
वृत्तिभेदेन तद्भेदा देहे पञ्च भवन्ति हि ॥१२७॥

कर्मेन्द्रियाणि पञ्चैव पञ्च ज्ञानेन्द्रियाण्यपि ।
महाभूतानि पञ्चैव पञ्च प्राणास्तथा इमे ॥१२८॥

अविद्याकामकर्माऽन्तःकरणं सचतुष्टयम् ।
अष्टानां हि समूहोऽस्ति पुर्यष्टकचतुष्टयी ॥१२९॥

अपञ्चीकृतभूतैर्हि सूक्ष्मदेहः समुद्भवेत् ।
आत्मोपाधिरयं देहः स भुङ्क्ते कर्मणः फलम् ॥१३०॥

स्थूलदेहोऽपि भुङ्क्तेऽत्र जागरे कर्मवैभवम् ।
सूक्ष्मदेहो विभ्रमति स्वप्ने स्वेच्छानुसारतः ॥१३१॥

बुद्धिस्त्वात्मोपाधिरस्ति कर्माणि कुरुतेऽत्र सा ।
जीवात्मा नैव कुरुते सोऽसङ्गोऽस्तीह निर्मलः ॥१३२॥

यथा शिल्पी कर्म कर्ता साधनैरिह सर्वतः ।
सूक्ष्मदेहेन चाऽऽत्मापि कर्मकर्ताऽत्र दृश्यते ॥१३३॥

इन्द्रियाणामेव धर्मा यथाऽन्धपटुता तथा ।
धर्मा आध्यासिका चात्र न तु वै चात्मनः सदा ॥१३४॥

**अतद्वस्तुनि तद्वस्तु दृश्यते यत्र यत्र चेत् ।**
**अध्यासः स हि सर्वत्र रज्जौ सर्प इव भ्रमः ॥१३५॥**

खादन् गच्छन् श्वसन् जिघ्रन्नुन्मिषन्निमिषन्निह ।
प्राणधर्मा इमे ज्ञेया नाऽऽत्मधर्माः कदाचन ॥१३६॥

सच्चिदाभाससन्दीप्तं कृतं कर्मेन्द्रियैरिह ।
अहं ममेति बुद्ध्यैव ब्रूतेऽन्तःकरणं सदा ॥१३७॥

कर्ता भोक्ताऽस्म्यहं बुद्ध्याऽहंमत्या मन एव हि ।
त्र्यवस्थायां भ्रमत्येव कर्ताऽहमिति मन्यते ॥१३८॥

प्रातिकूल्यभवं दुःखमानुकूल्यभवं सुखम् ।
देहाऽहंकारधर्मौ तौ न सुखं दुःखमात्मनः ॥१३९॥

प्रियाऽप्रिया तथा स्निग्धा आत्माऽर्थं न स्वतः प्रियाः ।
सर्वे कलत्रपुत्राद्या आत्मार्थमेव ते प्रियाः ॥१४०॥

आत्मा तु सच्चिदाऽऽनन्दो दुःखशून्यः परात्परः ।
सुषुप्तौ विषयाऽभावात् सुखं मिलति सन्ततम् ॥१४१॥

या ब्रह्मणः सृष्टिशक्तिरनादि त्रिगुणात्मिका ।
अनिर्वाच्या हि मायाऽस्ति न सा सदसदात्मिका ॥१४२॥

नैवाऽस्ति माया सदसत्स्वरूपा
दृश्यात्मिका याऽस्ति न सा हि माऽर्थः ।
साऽङ्गाऽप्यनङ्गा ह्युभयात्मिका न
महाऽद्भुताऽनिर्वचनीयमाया ॥१४३॥

सर्पभ्रमे यदा रज्जुज्ञाते सर्पो निवार्यते ।
ब्रह्मज्ञाने सति यदा मायाऽज्ञानं निवार्यते ॥१४४॥

त्रिगुणा दृश्यते सा तु माया सत्त्वरजस्तमा
विभ्रामयति साऽप्येतैर्गुणैरज्ञं हि सर्वदा ॥१४५॥

सत्त्वं नयत्युपर्येव मध्यस्थो रजसा भवेत् ।
तमोऽधः पातयेदेवं नरं त्रिगुणमायया ॥१४६॥

अभावना वा विपरीतभावना
संभावना विप्रतिपत्तिभावना ।
दोषा इमे मायिकभावयुक्ता
एभिर्जनो व्याकुलतामवाप्नुयात् ॥१४७॥

अज्ञानमालस्यजडत्वमेवं
निद्राप्रमादौ हि तमो गुणात्मकाः ।
धर्मा मनुष्येषु यदा वसन्ति
निद्रादिभिस्ते तु विमूढतां गताः ॥१४८॥

सत्त्वे विशुद्धे हि यदा मिलितौ चेद्रजस्तमौ ।
विभ्रामयत्येव जनं तौ तु बन्धनकारकौ ॥१४९॥

यदि बुद्धौ समायाति दर्पणे प्रतिबिम्बवत् ।
यथा सूर्यः सत्त्वगुणः सुदृश्यानि प्रकाशते ॥१५०॥

तदाऽऽत्मानुभवे निष्ठा स्थैर्यं शान्तिः प्रसन्नता ।
पराऽऽनन्दः परातृप्तिः शुद्धिः सत्त्वगुणस्थितौ ॥१५१॥

यदज्ञानं न चाऽव्यक्तं जागरे जीवसुप्तिषु ।
अभिव्यक्तं तदज्ञानं स्वप्नरूपेण दृश्यते ॥१५२॥

यत्र प्रतीतिर्नैवाऽस्ति यत्र बुद्धिर्विशीर्यते ।
न जानामीति नो ब्रूते आनन्दोऽभूद् ब्रवीत्यहो ॥१५३॥

पञ्चभूतान्यहङ्कारो देहप्राणेन्द्रियाण्यपि ।
मायाविकारास्ते सन्ति ह्यनात्मानः सुनिश्चयः ॥१५४॥

ज्ञाताऽहं प्रत्ययस्यापि पञ्चकोशादितः परः ।
त्र्यवस्थायाश्च यः साक्षी परमात्माऽस्ति निश्चयः ॥१५५॥

जडबुद्ध्यादिदृश्यानि सर्वाण्यात्मा तु पश्यति ।
बुद्ध्यादिभिर्जडैरात्मा द्रष्टा नैवाऽभिदृश्यते ॥१५६॥

यस्य सान्निध्यमाप्यैव देहबुद्धीन्द्रियादयः ।
लगन्ति स्वे स्वे विषये प्रेरिताः सक्रियाश्च ते ॥१५७॥

देहबुद्धीन्द्रियैर्यो हि जानातीह सुखादिकम् ।
स नित्यबोध आत्माऽस्ति ज्ञातव्योऽत्र मुमुक्षुभिः ॥१५८॥

अखण्ड आत्मा विज्ञेयः पुराणो बोधवैभवम् ।
प्राणादयश्चलन्तीह यतः प्राप्य सुचेतनाम् ॥१५९॥

प्रविश्य स्वशरीरान्तर्दहरव्योमसंविशन् ।
आत्मानमनुसन्धीयान् मुमुक्षुर्धैर्यमाचरन् ॥१६०॥

जीवाऽत्मा जायते नैव वर्द्धते म्रियते न च ।
देहान्ते परमात्मानं मिलन्नेकीभवत्यसौ ॥१६१॥

मायाविकारतः शून्य आत्माऽयं सर्वभासकः ।
जाग्रत्स्वप्नसुषुप्तीनामयं साक्षी प्रकाशकः ॥१६२॥

कृत्वा सुनिर्मलां बुद्धिं स्वमात्मानुभवज्जनः
ब्रह्मात्मैक्ये स्थितिर्यस्य स पारं याति निश्चितम् ॥१६३॥

अज्ञातब्रह्मणो ज्ञानकर्म चातीव दुष्करम् ।
अविद्यायाः परं ब्रह्म ह्यवाङ्मनसगोचरम् ॥१६४॥

त्वया पृष्टं पूर्वमेव बन्धनं किमिहोच्यते ।
शृणु त्वमेकाग्रमनाः सारांशेन वदाम्यहम् ॥१६५॥

आध्यासिकमहं जन्यं मनो मुख्यं हि बन्धनम् ।
इदं शरीरमात्मेति मत्वा पापं करोत्यपि ॥१६६॥

अनेकजन्मनामस्मत्कर्मभिश्च शुभाऽशुभैः ।
सञ्चितैर्जायते जीवो नाना योनिषु निश्चितम् ॥१६७॥

अशुभैर्नीचयोनौ स शुभैस्तु देवयोनिषु ।
समत्वे मर्त्ययोनौ स जायते स्वस्य कर्मणः ॥१६८॥

देहान्तःकरणे लिप्तमज्ञानं मुख्यबन्धनम् ।
तथाऽऽवरणविक्षेपौ तस्यैतौ मुख्यसाधनौ ॥१६९॥

अज्ञानवारितो ह्यात्माऽनात्मानं सृजति स्वतः ।
अतद्वस्तुनि तद्बुद्धिरियं हि मुख्यबन्धनम् ॥१७०॥

यदा सर्पभ्रमो रज्जौ भवेद् रज्जुर्न दृश्यते ।
अज्ञानमेव सृजति ज्ञानात् सर्पो निवार्यते ॥१७१॥

व्योम्नि सृजति सूर्यो हि कृष्णकादम्बिनीदलम् ।
कादम्बिनीदलैरेव वार्यन्ते सूर्यरश्मयः ॥१७२॥

तथैव तुच्छमज्ञानमात्मन्येवाऽऽश्रितं सदा ।
व्याप्तमात्मनि तेनैवाऽज्ञानादात्मा निवार्यते ॥१७३॥

आत्माऽनात्माऽनयोः सम्यङ् नैव भूते विवेचने ।
अज्ञानमेव बन्धोऽस्ति जनः सरति संसृतौ ॥१७४॥

मोक्षबन्धनयोर्द्वारं मन एवाऽऽदिकारणम् ।
बन्धनं विषयाऽऽसक्तिर्विषयत्यागमोक्षणम् ॥१७५॥

अहं भावो यस्य नास्ति बुद्धिः शुद्धा सदैव चेत् ।
निर्लिप्तः स हि निष्कामः सरःसु कमलं यथा ॥१७६॥

बुद्धेरवस्था तु त्रयः स्वप्नजाग्रत्सुषुप्तयः ।
एतासु जीवो भ्रमति नानानाम गृणन् सदा ॥१७७॥

जाग्रत्सु विश्वं जीवोऽस्ति तैजस् स्वप्नेषु भाति सः ।
व्यष्टेरंशा इमे दृष्टा जीवः प्राज्ञः सुषुप्तिषु ॥१७८॥

सुप्ते हिरण्यगर्भोऽस्ति विराडपि स जाग्रति ।
समष्टेर्जीवनामानि सुषुप्तौ तु स ईश्वरः ॥१७९॥

बुद्धिरज्ञानजन्याऽस्ति त्रयोऽवस्थाऽसतोऽभवन् ।
व्यष्टिः समष्टिर्मिथ्ये स्तो नित्यः साक्षी सदैव सत् ॥१८०॥

जगदीश्वरजीवानामज्ञानं सृष्टिकारणम् ।
अज्ञानं बीजमत्रास्ति विचित्रं सृष्टिकारणम् ॥१८१॥

शिष्यः –
भवदाज्ञा गुरोरेषा माया सृष्टमिदं जगत् ।
श्रुतिर्गदति ब्रह्माऽपि यथा पूर्वमकल्पयत् ॥१८२॥

न वेद्म्यहं गुरो ! सृष्टिर्ब्रह्मणा कल्पिता कथम्
एतत् सर्वं हि सुष्पष्टमाज्ञापयतु मामिह ॥१८३॥

गुरुः –
त्वयाऽधुना कृता याऽस्ति जिज्ञासाऽतीवशोभना
सङ्क्षेपतोरहं वच्मि सावधानमनाः श्रुणु ॥१८४॥

माया जडात्मिकाऽस्त्येव भावरूपाऽप्यनात्मिका ।
अज्ञानं चाऽप्यविद्या च सर्वा एव जडात्मिकाः ॥१८५॥

माया तु ब्रह्मणः शक्तिरविद्या चेश्वरस्य हि ।
जीवस्य शक्तिरज्ञानं सर्वा हि सृष्टिसाधनम् ॥१८६॥

एता निमित्तमात्रं हि चिच्छक्तिर्मुख्यकारणम्
क्षेत्रक्षेत्रज्ञयोरेकः स्रष्टा हि मुख्यकारणम् ॥१८७॥

अनात्मजन्यान् बन्धांस्तु छेत्तुमस्त्रादयो न हि ।
परं सज्ज्ञानतश्छेत्तुं शक्यतेऽज्ञानबन्धनम् ॥१८८॥

येन वैदिकसद्धर्मं मानयन् पालितं भवेत् ।
तेनैव ब्रह्मणो ज्ञानं शक्यते बन्धभेदनात् ॥१८९॥

यथा कूपजलं स्वच्छं जलनील्या निरुध्यते ।
तथा कोशादिभिश्चात्मा द्रष्टुं ज्ञातुं निरुध्यते ॥१९०॥

शिष्यः –
अज्ञस्य लक्षणं सर्वमाज्ञापयतु हे गुरो !
स्वरूपं ज्ञानिनोऽप्येवं ब्रह्मज्ञस्यापि लक्षणम् ॥१९१॥

गुरुः –
प्रथमं शृणु हे तात ! सङ्क्षिप्तमज्ञलक्षणम् ।
ततो वक्ष्याम्यहं ब्रह्मज्ञानिनः शुभलक्षणम् ॥१९२॥

अहङ्कारी त्वहंमानी प्रायो भवति तामसः ।
मदन्यो नास्ति धीरोऽपि सर्वज्ञोऽहं ब्रवीति सः ॥१९३॥

अहं ज्ञानी पण्डितश्च ब्रूते चाज्ञानवान् सदा ।
अज्ञः स्वयं तु शास्त्रान्धः शिक्षणं कर्तुमीहते ॥१९४॥

स्वयमस्ति स शास्त्रान्धः किमन्यान् शिक्षयेदिह ।
स्वयं गर्ते निपतति पातयेदनुयायिनः ॥१९५॥

आत्मानं पण्डितंमानी तमस्यन्धे वसन्नपि ।
अन्धेन सह सङ्गच्छन् स्वयमन्धः करोतु किम् ? ॥१९६॥

मत्सरेणाऽन्वितो नित्यं सदाऽसूयति ज्ञानिनम् ।
अहं धरामि खादामि धनाढ्यं मन्यते स्वकम् ॥१९७॥

मूढोऽज्ञानी च पापात्मा क्रूरः सर्पाधिकोऽधमः ।
एतादृशात् परो वासः शास्त्राणि कथयन्त्यपि ॥१९८॥

स्थितधीर्ब्रह्मवेत्ता तु कामरागविवर्जितः ।
स्थितप्रज्ञः समाधिस्थो द्रष्टा सद्ब्रह्मणि स्थितः ॥१९९॥

त्यजति मनसः कामान् रमते नित्यमात्मनि ।
आत्माराम आरमति रागद्वेषविवर्जितः ॥२००॥

अन्तःस्थसाक्षी प्रतिवर्तितः स
वस्ता सदैवाऽऽरमति प्रशान्तः ।
ध्वान्तं समस्तं स निरस्य पश्येत्
शीघ्रं स गन्ता भवसिन्धुपारम् ॥२०१॥

शिष्यः –

अन्धकारः किमस्त्येवं गुरो ! स कुत आगतः ।
कथमस्य विनाशः स्यात् कथं विलयते हि सः ॥२०२॥

गुरुः –

अन्धकारोऽस्त्यविद्यैव स आयाति प्रकाशतः ।
पुनः प्रकाशं गन्ताऽस्ति तदन्ते विलयो भवेत् ॥२०३॥

यथा ब्रह्माऽऽश्रिताऽविद्या ब्रह्मणो विनिवारिणी ।
सूर्यात् समुद्भवो मेघो यथा सूर्यस्य वारणः ॥२०४॥

अध्यासमायाऽज्ञानानि भ्रमाऽविद्यादिभावनाः ।
अनिर्वाच्यानि सर्वाणि तमोरूपाणि भान्ति हि ॥२०५॥

माया तु ब्रह्मणः शक्तिरज्ञानं जीवयोग्यता ।
समष्टिर्व्यष्टिःसंसृष्टिरेता मायाऽऽदिकारणम् ॥२०६॥

यथैवं सूर्यरश्मिभ्यो नित्यं तम उदेत्यहो !
तमोऽस्तमेति सूर्यस्य रश्मिभिः सह लुप्यते ॥२०७॥

शिष्यः –

आत्माऽस्तित्वं भाति देहे कथं ज्ञातुं सुदुष्करम् ।
निवार्यते केन चैतद् गुरो ! कथमभूदिदम् ॥२०८॥

गुरुः –

यथा स्वच्छं कूपजलं जलनील्या निरुध्यते ।
तथाऽऽत्मानमपि ज्ञातुं पञ्चकोशैर्निरुध्यते ॥२०९॥

जलनीलीं निषेधे तु दृश्यते निर्मलं जलम् ।
दृश्येताऽत्माऽप्यवश्यं हि पञ्चकोशनिवारणे ॥२१०॥

शिष्यः –

पञ्चकोशाः सन्ति के ते गुरो ! मां श्रावयत्वथ ।
उत्पद्यन्ते कथं देहे तेषां कर्म किमस्त्यहो ! ॥२११॥

गुरुः –

मिथ्यान्नजलसृष्टानि देहधर्माणि यानि हि ।
भिन्ना देहादयो धर्मा दृश्यन्ते साक्षिणाऽऽत्मना ॥२१२॥

मलदोषादिभिर्युक्तो देहो जड इतीर्यते ।
चिदाऽऽत्मा ज्ञायते नैव प्रयासेनाऽपि तेन तु ॥२१३॥

चतुःसाधनयुक्तेन जनेनेह विवेकिना ।
देहभिन्नः स्वकीयाऽत्मा ज्ञायते स्वप्रयासतः ॥२१४॥

यावद् देहात्मबुद्धिं त्वं भ्रमं नैव जहासि चेत् ।
ब्रह्मज्ञानं नैव तावद् भवेदिति विनिश्चितम् ॥२१५॥

पञ्चप्राणैः सुसंयुक्तः कोशः प्राणमयोऽस्ति हि ।
तेनैव साधनेनाऽयं क्रियाशीलो जनो भवेत् ॥२१६॥

मिथ्या जडोऽयं कोशोऽस्ति विकारः पवनस्य हि ।
इष्टाऽनिष्टविचारेण विवेचयति नैव सः ॥२१७॥

अन्यो मनोमयः कोशो भूत्वा ज्ञानेन्द्रियैः सह ।
अहं मम वदन्नेष दृष्टश्चेतनवत् सदा ॥२१८॥

मायाविकारः कोशोऽयं कारणं बन्धमोक्षयोः ।
यदा भवेन्मनोनाशस्तदा बन्धनिवारणम् ॥२१९॥

यथा मनः प्रकुरुते निरर्थं स्वप्नसर्जनम् ।
तथैव जाग्रतौ पश्य मनसोऽनेकसर्जनम् ॥२२०॥

मनः स्वं कारणं गत्वा सुषुप्तौ मिलति स्वयम् ।
तदा जीवस्तु साऽऽनन्दो मनो नाशात् सुषुप्सति ॥२२१॥

अतो ये पञ्चकोशा हि भवन्ति बन्धहेतवः ।
तेषां मनोमयः कोशो मुख्योऽन्ये तस्य साधकाः ॥२२२॥

शिष्यः –
कारणं बन्धमोक्षस्य तन्मनः कीदृशं भवेत् ।
शिष्योऽहं मां शाधि गुरो ! यदि योग्योऽस्मि तच्छ्रुतौ ॥२२३॥

गुरुः –
'द्रष्टा दृश्य'मिदं पुस्तमपठिष्यद् यदा यदि ।
तदा सत्यमबोधिष्यद् याथार्थ्येन मनो भवान् ॥२२४॥

मनःप्रसूताः सर्वे हि देहवर्णा श्रमादिकाः ।
क्रियाविषयसत्त्वादिगुणाश्चाञ्चल्यलोभने ॥२२५॥

जन्मादिमरणान्तानि कर्माण्यध्यासजानि हि ।
सर्वं मनःकल्पितं स्यान्मनो हि मूलकारणम् ॥२२६॥

अविद्याप्रग्रहेणैव मनः संसारसारथिः ।
घोटकानिन्द्रियाण्यस्य संसारे सारयत्यहो ! ॥२२७॥

यथा मेघो विभ्रमति व्योम्नि भूमौ मनो भ्रमेत् ।
स्वच्छं मनो यदि भवेत् तदा जीवो विमोक्षति ॥२२८॥

शिष्यः –
कोशं निर्मीति बुद्धिर्हि सह ज्ञानेन्द्रियैरिह ।
अध्यासजन्यः कोशोऽयं ब्रूतेऽहं मम इत्यपि ॥२२९॥

गृहीत्वा प्रतिविम्बं स चेतयते चिदात्मनः ।
प्रारब्धतो जायते स सुखदुःखादिभुग् भवेत् ॥२३०॥

का बुद्धिरात्मा कोऽध्यासो जगत् किमिति चिन्तनम् ।
कृतेऽबोधे तदज्ञानं बोधे ज्ञानं भवेदिह ॥२३१॥

बुद्धिस्तु मायाविकृतिरंशोऽन्तःकरणं भवेत् ।
मनश्चित्तमहङ्कारश्चतुर्थी बुद्धिरुच्यते ॥२३२॥

मनस्तर्कयते नित्यं नैव निश्चिनुते ध्रुवम् ।
बुद्धिरन्त्ये करोत्येव कृत्याऽकृत्यविनिर्णयम् ॥२३३॥

**एषणाकामनायुक्ता बुद्धिर्बन्धनकारिका ।**
**एषणाकामनामुक्ता बुद्धिस्तु मोक्षकारिका ॥२३४॥**

बुद्धिस्तु मायाकार्यं स्याज्जडा सत्त्वगुणात्मिका ।
सत्त्वं ज्ञानात्मकं विद्धि तच्चिदाभासवाहकम् ॥२३५॥

माया तत्कार्यतो ब्रह्म दूरमेवाऽस्ति विद्धि तत् ।
साक्षात्कारं ब्रह्मणोऽपि दूरमत्यन्तदुष्करम् ॥२३६॥

माया त्वध्यारोपिताऽस्ति त्वपवादे कृते हि ताम् ।
वाक्यश्रवणमेवाऽत्र साक्षात्कारेऽस्ति साधनम् ।।२३७।।

उपलक्षणमात्रं स्याद् बाह्यं मायिकसाधनम् ।
अन्तःस्था बुद्धिरेवैका साक्षात्कारेऽस्ति साधनम् ।।२३८।।

स्वच्छा सुनिर्मला बुद्धिः सूक्ष्मदर्शनदक्षिणा ।
ब्रह्मतुल्या निर्मला चेन्निर्मलं ब्रह्म पश्यति ।।२३९।।

मुमुक्षुरपि स्वच्छश्चेद् ब्रह्म साक्षात्करोत्यहो ।
निवारिते हि मालिन्ये दर्पणे प्रतिविम्बवत् ।।२४०।।

अहं स्वभावयुक्तोऽस्ति कोशो विज्ञानसंयुतः ।
व्यावहारिककार्याणि करोति प्रतिपादनम् ।।२४१।।

कुरुते पुण्यपापानि पूर्वसंस्कारसंयुतः ।
एतेषां फलभोगी स्याद् जायते म्रियतेऽपि सः ।।२४२।।

गच्छत्युपर्यधो नित्यं नानायोनिषु जायते ।
संसारे संसरत्येष पारं नैति सुदुःखितः ।।२४३।।

जाग्रत्स्वप्नं सुषुप्त्यादिष्ववस्थाषु भ्रमन्नपि ।
भोगान् भुनक्ति जीवात्मा विज्ञानमयजीवनम् ।।२४४।।

अहं ममेति मत्वैव जीवाऽऽत्मा स्वं शरीरकम् ।
आत्मैव मनुतेऽध्यासाद् दृश्यं सत्यं च मन्यते ।।२४५।।

कर्ता भोक्ताऽस्म्यहं मत्वा काम्यकर्माणि कुर्वतः ।
संस्कारवासनायुक्तो म्रियते जायते पुनः ।।२४६।।

विज्ञानसंयुता बुद्धिस्तस्यांऽशे सात्त्विके पुनः ।
दृष्टेन साक्षिविम्बेन जातो जीवो यथार्थतः ।।२४७।।

प्रतिविम्बोऽस्ति जीवोऽपि चितेराभासतो ध्रुवम् ।
बुद्धौ हि चेतनाऽऽयाति चिदचिद्ग्रन्थिजीवनम् ॥२४८॥

धियः स्वरूपाध्यासेन संसर्गाध्यासतश्चितेः ।
प्राणी भवति जीवाऽऽत्मा ह्यन्योन्याध्यासतो द्वयोः ॥२४९॥

विज्ञानमयकोशोऽपि ह्यात्मोपाधिः सुनिश्चितः ।
अस्मिन्नेवाऽऽत्मबुद्धया हि जायते म्रियते च सः ॥२५०॥

अयोगोले मिलन्नग्निस्तदाकारायितो यथा ।
उपाधौ सम्मिलन्नाऽऽत्मा तदाकारायितस्तथा ॥२५१॥

शिष्यः –

जीवात्मभावोपाधिः स्यादात्मनः प्रतिविम्बतः ।
उपाधिः शाश्वतो दृष्टः कथं तन्नाशमाप्नुयात् ? ॥२५२॥

जीवभावं यदा प्राप्तो देहो नित्योऽप्यनादिमान् ।
यदि तस्य निवृत्तिर्न मोक्षोऽपीतो भवेन्न हि ॥२५३॥

गुरुः –

अतीव रम्यः प्रश्नोऽयं सावधानमनाः शृणु ।
अज्ञानिनां तर्क एष भ्रमपूर्णोऽस्ति भावय ॥२५४॥

आकाशे नीलिमा दृष्टाः सोऽध्यारोपोऽथवा भ्रमः ।
तथाऽऽत्मनि निष्कलेऽपि क उपाधिर्भ्रमो हि सः ॥२५५॥

रागादियुक्ते पात्रेऽपि रक्षणे निर्मलं जलम् ।
रक्तं पीतं वापि नीलं दृश्यते तत्तु निर्मलम् ॥२५६॥

तथैव दृष्टो जीवाऽऽत्मा मनुष्यपशुपक्षिषु ।
दृष्टौ तथैव भात्येव न देहः स तु निर्मलः ॥२५७॥

आत्मा तु निर्गुणः साक्षी प्रत्यगात्मा स निर्मलः
सदऽऽनन्दो जीवभावेनोत्पन्नो बुद्धिविभ्रमात् ॥२५८॥

ज्ञानादध्यासमोहाभ्यामतद्वस्तुनि तद् भ्रमम् ।
निरस्य जीवो ब्रह्मैव भाति जीवस्तु ब्रह्म हि ॥२५९॥

अज्ञानजन्यः सर्पोऽस्ति रज्जौ सर्पस्य विभ्रमः ।
रज्जुज्ञानात् सर्पनाशो यथाऽऽत्माऽस्ति तथैव सः ॥२६०॥

तथैवाऽज्ञानतो देहे जीवभावः समुद्भवेत् ।
ब्रह्मज्ञानं भवति चेज्जीवभावो विनश्यति ॥२६१॥

उपाधियुक्त्या बुद्ध्या हि जीवभावः समुद्भवेत् ।
यदोपाधिर्विनष्टः स्यात् तदाऽऽत्मा संप्रकाशते ॥२६२॥

सम्यग्विवेकतो याति आत्माऽनात्माऽनयोर्भ्रमम् ।
एतस्मात् कारणात् कुर्यात् सदसज्ज्ञानयोः श्रमम् ॥२६३॥

यथाऽऽविलं जलं स्वच्छं भवेत् कालान्तरे तथा ।
मेघे वाताहते व्योम्नि स्वच्छे सूर्योऽपि भासते ॥२६४॥

विज्ञानमयकोशोऽयमतदवस्तु न शाश्वतः ।
एतस्मात् कारणादेष आत्मा नैवाऽस्त्यनात्मकः ॥२६५॥

आनन्दमयकोशोऽपि सुषुप्त्यस्ति तमोमयः ।
साक्ष्याकारादिवृत्तीनामुद्गमा भूमिरेव सः ॥२६६॥

प्रियमोदप्रमोदादीन् जीवो भोक्ता निरन्तरम् ।
तमेतं कथयन्ति स्म ब्रह्मानन्दसहोदरम् ॥२६७॥

आनन्दभानं यद् भाति जीवात्मानं सुषुप्तिषु ।
तथैव क्षुद्र आनन्दः प्राप्यते जाग्रदादिषु ॥२६८॥

कोशोऽयमात्मा नास्त्येव ह्यनात्माऽस्ति विकारकः ।
प्रियाद्यङ्गेन संयुक्तः सार आविद्यिकस्त्वयम् ॥२६९॥

एवमन्नादयः कोशा युक्तितः श्रुतितोऽपि च ।
वारिताश्चेद् भवेच्छेषः साक्षी संवित् स्वयं भवेत् ॥२७०॥

एष आत्मा स्वयं ज्योतिः पञ्चकोशविलक्षणः ।
जाग्रदादौ स साक्ष्यस्ति नित्यानन्दः प्रतिक्षणम् ॥२७१॥

शिष्यः –
पूर्णरूपेण ते पञ्चकोशास्त्वत्र निषेधिताः ।
अन्तःशून्यं भवति चेच्छून्यमेवं समुद्भवेत् ॥२७२॥

शून्याऽऽधारे तमात्मानं ज्ञानी चिन्तयते कथम् ?
बौद्धसिद्धान्त एष स्याद् वेदान्तः खण्डितो भवेत् ? ॥२७३॥

गुरुः –
यदा मिथ्या विकारास्तेऽहंकारेण समं ययुः ।
शेषो भवति साक्षी स चिन्तयन्ते बुधा हि तम् ॥२७४॥

द्रष्टा साक्षी स्वयं ज्योतिर्दृश्यं जानाति स स्वयम् ।
निषेधयति द्रष्टा तान् कोशकार्यादिकान् जडान् ॥२७५॥

स्वयमात्मा स्वयं साक्षी सर्वान् जानाति स स्वयम् ।
आत्माऽद्वयं सच्चिदस्ति ह्येतद् वेदान्तसम्मतम् ॥२७६॥

आत्माऽन्वितो वसत्यत्र जाग्रत्स्वप्नसुषुप्तिषु ।
अन्ये स्वप्नादयोऽन्योऽन्यं व्यतिरेका वसन्त्यपि ॥२७७॥

प्रतिविम्बं जले दृष्ट्वा सूर्यं जानाति मन्दधीः ।
शरीरादौ चिदाभासं तमात्मा मनुते जडः ॥२७८॥

प्रतिविम्बोऽयमित्युक्त्वा सूर्यं पश्यति कोविदः ।
त्यक्त्वाऽऽभासं चिदात्मानं स्वकं जानाति सज्जनः ॥२७९॥

देहं बुद्धिं चिदाभासं त्यक्त्वा सर्वानिमान् जनः ।
गुहायां तिष्ठते साक्षी धीवृत्तिस्तं निबोधते ॥२८०॥

सर्वप्रकाशः सत् सूक्ष्मो ह्यसतोऽपि विलक्षणः ।
विभुः साक्षी सर्वगोऽस्ति बोधरूपः प्रतिक्षणम् ॥२८१॥

अतद्वस्तु निवृत्ते तु त्वं वाच्यस्त्वमुदीर्यसे ।
तद् वाच्यं ब्रह्म विज्ञातेऽसिपदात् शोधितो भवेः ॥२८२॥

निस्तारमाप्तुं तज्ज्ञानं दुश्चक्राद् भवसंस्कृतेः ।
नाऽन्यं साधनमस्त्यत्र ब्रह्मज्ञानं विना परम् ॥२८३॥

शिष्यः –

अतद्वस्तुक्षयं कृत्वा कथं ज्ञानी भवेद् गुरो !
तद्रूपं ब्रह्म भवतीत्यत्र मेऽतीव संशयः ॥२८४॥

गुरुः –

प्रश्नोऽयमतिगम्भीरो बोद्धुमत्यन्तदुस्तरः ।
एकाग्रमनसा श्रुत्वाऽवधारय निरन्तरम् ॥२८५॥

अतदवस्तु ह्यविद्याऽस्ति तस्य नाशे तु निश्चितम् ।
सद् ब्रह्म शान्तमद्वैतं शेषं तिष्ठति निश्चितम् ॥२८६॥

अविद्या सह कार्येण हृदयाद् विनिवारिता ।
निषेध्यं हेतुना ध्वस्तं निषेधोऽपि निवारितः ॥२८७॥

अतद्वस्तु प्रमाता हि सर्वमेव निषेधति ।
प्रमातृत्वं प्रमातुश्च नेति वाक्यान्निषेधति ॥२८८॥

मायां तत्कार्यमपि च प्रमाता हि निषेधति ।
प्रमातुः कार्यमप्येवं नेति वाक्यं निषेधति ॥२८९॥

परन्तु ब्रह्मन् ! तदपि ह्यविद्याजनितं यदि ।
तत् को निषेधति पुनस्तस्याऽप्यन्तं कुतो भवेत् ? ॥२९०॥

अन्त्यहीना पुनर्भूत्वा सैषा परम्परा चलेत् ?
तन्निस्तारः कथंमिति मां श्रावयतु हे गुरोः ॥२९१॥

गुरुः –
अतीव सुन्दरः प्रश्नो ज्ञातव्यो विषयोऽपि ह ।
अतद्दृश्यो निषेध्यो हि द्रष्टा मैवं निषेध्यकः ॥२९२॥

द्रष्टा तु ब्रह्म चिच्छक्तिस्तदन्यद्वस्त्वचित् समम् ।
निषेध्यानि हि सर्वाणि शेषं ब्रह्मैव तिष्ठति ॥२९३॥

शिष्यः –
महावाक्यं किमेतद्धि ? प्रकारास्तस्य के गुरो !
एतस्मात् को भवेल्लाभः सारवाक्ये प्रवक्तु माम् ॥२९४॥

गुरुः –
यज्जीवब्रह्मणोरैक्यं बोधयद् वाक्यमस्ति तत् ।
अभेदबोधकं वाक्यं महावाक्यं निगद्यते ॥२९५॥

अन्यवैदिकवाक्यानि लौकिकान्यपि सन्ति च ।
सङ्क्षिप्य निगदिष्यामि तेषां तात्पर्यमेव हि ॥२९६॥

एकत्वबोधे सञ्जाते जीवाऽत्मपरमात्मनोः ।
जीवस्य मुक्तिर्भवति श्रुतिरेवं वदत्यपि ॥२९७॥

बाह्याऽऽभ्यन्तररूपाणि मुक्तये साधनान्यपि ।
सन्ति तेषु महावाक्यं साक्षाद्धि मुक्तिसाधनम् ॥२९८॥

शिष्यः –

पठनीयं श्रवणीयं महावाक्यं किमस्ति तत् ।
कस्माद् वेदात् समानीतं भवन्तो निगदन्तु माम् ॥२९९॥

गुरुः –

स तु शुक्लयजुर्वेदः शाखा माध्यन्दिनी भवेत् ।
'अभयं वै जनक ! त्वं प्राप्तोऽसि' वाक्यमस्ति यत् ॥३००॥

सामवेदात् समानीतं वाक्यं 'तत् त्वमसी' ति यत् ।
अस्य वाक्यस्य कुर्वेऽहं विश्लेषणमपि शृणु ॥३०१॥

ऋग्वेदस्य महावाक्यं 'प्रज्ञानं ब्रह्म' केवलम् ।
अथर्वस्य महावाक्यं 'आत्माऽयं ब्रह्म' निश्चितम् ॥३०२॥

पितामहादिभिः साक्षाद् यो वेदः पठितो हि सः ।
पठितव्यो द्विजैर्वेदः पठनीयः स एव हि ॥३०३॥

शिष्यः –

कथमेतानि वाक्यानि साधनानि भवन्त्यहो !
हित्वाऽन्यसाधनं कस्मात् साक्षाज्ज्ञानं भविष्यति ? ॥३०४॥

गुरुः –

कानिचित् साधनानीह बाह्यान्याऽऽभ्यन्तराणि च ।
स्ववेदोक्तं महावाक्यमस्ति साक्षाद् हि साधनम् ॥३०५॥

शिष्यः –

महावाक्यानि चत्वारि श्रुतानीह गुरोर्मुखात् ।
कथं तानीह साक्षाद् वै मुक्तये साधनान्यहो ! ॥३०६॥

गुरुः –

रम्यः प्रश्नः कृतो विद्वन् ! बोद्धुमत्यन्तदुस्तरः ।
तथापि शृणु वक्ष्येऽहमवधानं कुरुष्व माम् ॥३०७॥

प्रतिपादनमैक्यस्य जीवाऽत्मपरमात्मनोः ।
यतः साक्षाद् भवत्येतन्महावाक्यं हि साधनम् ॥३०८॥

शिष्यः –

गुरो ! जिज्ञासुरत्राऽस्मि शिष्यस्तेऽहं प्रशाधि माम्
ऐक्यं कथं भवेदस्माज्जीवाऽत्मपरमात्मनोः ? ॥३०९॥

कथं भवेद् ब्रह्मणोऽत्र साक्षात्कारो यथार्थतः ।
अखण्डाकारवृत्तिः का शुश्रुषुरस्मि तत्त्वतः ॥३१०॥

गुरुः –

अज्ञानस्यापि द्वे शक्ती विक्षेपाऽऽवरणे हि ते ।
दृश्यते नैव रज्जुर्हि रज्जौ सर्पस्य विभ्रमे ॥३११॥

तथैवाऽज्ञानशक्त्या हि चित्तत्त्वे वारिते सति ।
अज्ञोऽपि वारितस्तत्र प्राज्ञेनाऽज्ञो न दृश्यते ॥३१२॥

यदि कर्माशयैर्नाशो वासनाः कर्मसञ्चिताः ।
अविद्याजन्यसंस्काराः क्षयमेष्यन्ति सर्वथा ॥३१३॥

अस्त्याऽऽवरणमज्ञानं तन्निरोद्धुं नु शक्यते ।
साक्षात्कारो भवति चेज्ज्ञानिभिर्मुक्तिराप्यते ॥३१४॥

महावाक्यं 'तत् त्वमसि' सामवेदोक्तमस्त्यपि ।
विश्लेषणं करोम्यत्र सोदाहरणमस्तु ते ॥३१५॥

आत्मैव 'तत्' पदार्थोऽस्ति जीवोऽयं 'त्वं' पदार्थवान्
द्वयोरैक्यं बोधयति क्रिययाऽसिपदेन वै ॥३१६॥

शुद्धं सत्त्वं विशिष्टादि तत्पदार्थविशेषणम् ।
तन्मात्रं चेतनं शेषस्तत्र तेषां निवारणात् ॥३१७॥

जीवाऽत्मपरमात्मानौ द्वावेव चेतनाविह ।
द्वयोरैक्यं गमयति क्रिययाऽसि पदाऽन्वितम् ॥३१८॥

यद्वा

तत्प्रातिपदिकं चैक्यं क्रियाऽसिपदमन्वितम् ।
ऐक्यं द्वयोर्गमयति क्रियाऽसिपदमन्वितम् ॥३१९॥

शिष्यः –

तत् प्रातिपदिकार्थत्वं नाबोधिषमहं गुरो !
साक्षात्कारे ब्रह्मणः किमुपयोगित्वमस्ति तत् ॥३२०॥

गुरुः –

एतज्ज्ञातव्यमत्यन्तं बोधनेऽपीह दुष्करम् ।
परं वाङ्मनसोश्चैव प्रमाणादपि दुर्गमम् ॥३२१॥

तत्त्वं पदद्वयोरन्तरनुस्यूतमखण्डितम् ।
अन्वितं चेतनं विद्धि क्रिययाऽसि पदेन तम् ॥३२२॥

मायोपाधिगतं चैतच्चेतनं यदपेक्षितम् ।
तत्त्वं पदद्वयोरन्तःस्थितं प्रातिपदार्थकम् ॥३२३।

नियतोपस्थितं चैतद् विद्धि प्रातिपदार्थकम् ।
निरूपितं व्याकृतौ तच्चित् प्रातिपदिकार्थकम् ॥३२४॥

चेतने वसतस्तत्त्वं किन्तु तौ नियतौ न हि ।
एकश्चेतनरूपोऽयमात्मा वसति सर्वतः ॥३२५॥

बोद्धुं लौकिकवाक्यानि विद्धि चैकमना भव ।
'अस्ति सोऽयं देवदत्तो' दृष्टान्तमिह संस्मर ॥३२६॥

'सोऽयं' परस्परे न द्वौ तिष्ठतोरेक एव हि ।
देवदत्तस्तु भवति द्वयोरेव पदोः स्थितः ॥३२७॥

विद्धि त्वं देवदत्तं तु चित् प्रातिपदिकार्थकम् ।
उदाहरणमेवैतदस्मिन् नास्ति यथार्थता ॥३२८॥

महावाक्यपदेष्वन्तर् वसत्येष निरन्तरम् ।
चित् प्रातिपदिकार्थः स परमात्मा परात्परः ॥३२९॥

श्रवणं मननं कार्यमात्मनो ज्ञानहेतवे ।
उपाधावनिवृत्ते तु साक्षात्कारोऽस्ति दुष्करः ॥३३०॥

सौम्य ! त्वमत एवाऽद्य कुरुष्वोपाधिमार्जनम् ।
पुरा ब्रह्मैवासि तात ! पुनर्ब्रह्मणि लीयसे ॥३३१॥

यदभेदज्ञानमस्ति जीवात्मपरमात्मनोः ।
तत्क्षणं नाशमायाति दुष्करं भवबन्धनम् ॥३३२॥

ब्रह्मविद् ब्रह्म भवति जन्ममृत्योः स निर्भयः
अभयं ब्रह्म विद्धि त्वं साक्षाद् ब्रह्म तु निर्भयम् ॥३३३॥

सत्यं ज्ञानमनन्तं हि नित्यमानन्दशाश्वतम् ।
विशुद्धः प्रत्यगात्मा सच्चिदात्मा श्रुतिसम्मतः ॥३३४॥

शिष्यः –

श्रुतो मयाऽत्र वेदान्तो बुद्धं तात्पर्यमस्य हि ।
ब्रह्मज्ञानार्थमस्त्येतत् सारांशोऽस्य यथार्थतः ॥३३५॥

मननं विहितं तर्कः प्रमाणेन कृतो मया ।
मानान्तरं विरोधादि समुपेक्षैव तत्त्वतः ॥३३६॥

निरुध्य विषयाऽऽसक्तं मनो मे वस्तुतोऽन्वहम् ।
कृतं निदिध्यासनं च ज्ञानार्थं हे गुरो ! ऽधुना ॥३३७॥

ब्रह्माभ्यासः कृतः सम्यक् संशयो मनसि स्थितः
गुरो ! मे संशयं सम्यक् सङ्क्षयं कर्तुमर्हसि ॥३३८॥

गुरुः –
सौम्य ! वेदान्तसिद्धान्तः संक्षेपेणेह दर्शितः ।
कथनीयं शेषमस्ति किं बुद्धं ? शेषमस्ति किम् ? ॥३३९॥

शिष्यः –
भवदुक्त्यनुसारेण श्रवणं मननं कृतम् ।
गुरो ! यद् विहितं सम्यक् तन्मया विनिवेदितम् ॥३४०॥

याथार्थ्येनैव चैकत्वं जीवाऽत्मपरमात्मनोः ।
भवतीति श्रुतं किन्तु न ज्ञातं तन्मयाऽधुना ॥३४१॥

अप्रमेयश्चिदात्माऽस्ति ह्यवाङ्मनसगोचरः ।
अप्रतर्क्यं वस्तु चैतद् बोद्धुमत्यन्तदुष्करम् ॥३४२॥

मायाकार्यादपि परं मायायाश्च परात्परम् ।
चितिरस्ति गुरो ! तां को जानीयादतिदुष्कराम् ॥३४३॥

गुरुः –
अतीव रम्यः प्रश्नोऽयं प्रश्नार्थं कुशलो ह्यसि ।
वेदान्तसारं वक्ष्येऽहं तात्पर्यमवधारय ॥३४४॥

सकलवाङ्मनसोऽपि न गोचरम्
सकलवाङ्मनसि स्थमिहाऽद्वयम् ।
कथमहो ! कथयामि तवाऽधुना
शृणु ! सदैकमनाऽद्वयशासनम् ॥३४५॥

शिष्यः –
श्रोतुमेकत्वमत्रैव जीवात्मपरमात्मनोः
तथैवैक्यं च शुश्रूषुर्भुवनब्रह्मणोरपि ॥३४६॥

गुरुः –
शिष्य ! त्वयैतद् बोद्धव्यं विवर्तं ब्रह्मणो जगत् ।
द्रष्टा ज्ञेयोऽस्ति तं ज्ञातुं विवेच्यं जगदेव हि ॥३४७॥

सत्यं ब्रह्माऽद्वैतमस्ति कमनीयमसज्जगत् ।
सम्यग् ज्ञाते सतीदं हि शेषं किञ्चिन्न तिष्ठति ॥३४८॥

अज्ञानकल्पितं विश्वं सत्यं ब्रह्मैव केवलम् ।
जगन्नाना दृश्यमस्ति त्वेकं ब्रह्माऽस्ति निर्मलम् ॥३४९॥

यथा भिन्नानि दृश्यन्ते मृत्पात्राणि तथैव तत् ।
यथार्थे मृत्तिकाऽन्यत्तु वाचारम्भणमात्रकम् ॥३५०॥

मृत्तिकायाः पृथङ्नैव मृत्पात्राणि घटादयः ।
तथा च भिन्नाऽलङ्काराः सर्वे स्वर्णविनिर्मिताः ॥३५१॥

कार्पासे हि परिज्ञाते ज्ञातास्तन्तुपटादयः ।
मोहकल्पितपात्राणि मृत्सुवर्णौ यथार्थतः ॥३५२॥

तथा दृश्यप्रपञ्चोऽयं सद्ब्रह्मैवाऽस्ति केवलम् ।
भिन्नं ब्रह्मेति यो वक्ति स प्रलापो यथार्थतः ॥३५३॥

इदं विश्वं ब्रह्ममात्रं श्रुतयो निगदन्त्यपि ।
विश्वमध्यारोपितं हि तस्मिन् ब्रह्मणि तिष्ठति ॥३५४९॥

यदि विश्वं सत्यमस्ति सुषुप्तौ नाऽभवत् कथम् ?
युक्त्या विचारितेऽप्येतन्मिथ्या विश्वं तु स्वप्नवत् ॥३५५॥

ब्रह्मणो न पृथग् विश्वं दृश्यते तद् भ्रमादिदम् ।
सन्ध्याकाले यथा रज्जौ दृष्टः सर्पो भ्रमादिह ॥३५६॥

भ्रान्ता जनास्तु सर्वत्र भ्रमं पश्यन्ति केवलम् ।
दृष्टे सर्पे रज्जुरिव भ्रमे सद्ब्रह्म तिष्ठति ॥३५७॥

शिष्यः –

श्रुतं मया गुरो ! सम्यग् गुह्यं वेदान्तसम्मतम् ।
जिज्ञासा वर्द्धिताऽद्यापि श्रुतमाज्ञापयष्व माम् ॥३५८॥

शुभलक्षणमेतद् हि जिज्ञासा वर्द्धिता तव ।
**आवृत्तिः सर्वशास्त्राणां बोधादपि गरीयसी ॥३५९॥**

आवृत्तिरसकृत् कार्या ह्युपदेशं गुरोरपि ।
न दोषो गुण एवाऽयमिति वेदान्तडिण्डिमः ॥३६०॥

**अधीते सति वेदान्ते दृश्यते ब्रह्म केवलम् ।**
प्रस्थानत्रयशास्त्रेऽपि ब्रह्माऽधीतिर्न संशयः ॥३६१॥

शिष्यः –

'सकृत् कृतेऽपि विहितो' मीमांसेमां प्रदूषयेत् ।
'आवृत्तिरसकृत् कार्या' वेदान्तो मनुते गुणम् ॥३६२॥

गुरुः –

कृतस्त्वयोत्तमः प्रश्नः प्रयाजादिककर्मणि ।
'श्रवणाद्याः सकृत् कार्या ह्यदृष्टफलकर्मणि ॥३६३॥

'द्रष्टव्यश्चापि श्रोतव्य' 'आवृत्तिमसकृत् कुरु ।'
साक्षात्कारे ब्रह्मणोऽत्र फलं दृष्टं सदाऽन्वितम् ॥३६४॥

'वेद एवमुपासीते'त्यादौ श्रुतिषु लक्ष्यते ।
आवृत्तिरसकृत् कार्या शास्त्राणामिति बुध्यते ॥३६५॥

## ब्रह्मनिरूपणम्

अद्वितीयं सदाऽऽनन्दं विज्ञानघननिर्मलम् ।
इदं शुद्धं सदा शान्तं सद्ब्रह्माऽस्तीह भासते ॥३६६॥

मायाया भेदरहितमप्रमेयं च निष्क्रियम् ।
नामरूपादिभिः शून्यं स्वयं ज्योतिः सदाऽव्ययम् ॥३६७॥

ज्ञाता ज्ञेयो ज्ञानमेभिस्त्रिपुटीरहिताऽव्ययम् ।
अखण्डानन्दं चिद्ब्रह्माऽनन्तं नित्यं सुनिर्मलम् ॥३६८॥

ग्रहणत्यागयोर्दूरमवाङ्मनसगोचरम् ।
अनादि सत्यं सद् ब्रह्माऽन्तहीनं चित् परात्परम् ॥३६९॥

शिष्यः –

यदैक्यबोधसम्बन्धे जीवाऽऽत्मपरमात्मनोः ।
जिज्ञासाऽभून्मयि ब्रह्मन् ! महावाक्यसमं पुनः ॥३७०॥

श्रुतं मयैतद् बहुशो बुद्धं नैव तथाप्यहो !
अनभ्यासवशात् किं वा बुद्धिर्मन्दाऽभवन्मम ॥३७१॥

आवृत्तिमसकृत् कर्तुं वेदान्तमतमस्ति चेत् ।
यथार्थं तन्महावाक्यं गुरो ! आज्ञापयष्व माम् ॥३७२॥

गुरुः –
आवृत्तिकरणं दोषो नैवास्ति श्रवणादिकम् ।
मननादिकमभ्यासः करणीयो निरन्तरम् ॥३७३॥

न बुद्ध्यन्तेऽन्यथा शास्त्रमर्माणि कथनेऽपि च ।
त्वया दत्ताऽवधानेन श्रोतव्यं कथनं मम ॥३७४॥

पूर्वमुक्तं महावाक्यं पुनर्वच्म्यधुना शृणु ।
मृत्युञ्जयस्त्वं भवसि श्रुत्वैतन्मननं कुरु ॥३७५॥

महावाक्यानि चत्वारि तत्त्वमस्यादिकान्यपि ।
साधनानीह मोक्षस्य श्रुतयो निगदन्त्यपि ॥३७६॥

'तद्'वाच्यमस्ति ब्रह्मैव जीवाऽत्मा 'त्वं' पदार्थवान् ।
'असि' क्रियायां चैतन्यमेकीभूतं द्वयोरिह ॥३७७॥

त्यक्ते वाचकवाच्यार्थे लक्ष्यार्थो ब्रह्म बुद्ध्यते ।
चिद् ब्रह्म शोधितं तद्धि गते तत् त्वं विशेषणे ॥३७८॥

तत् प्रातिपदिकार्थं हि नित्यं सद्ब्रह्म तिष्ठति ।
भेदोपाधिगतो ज्ञेयो दृष्टान्तो भूपभृत्ययोः ॥३७९॥

अतद्वस्तुनि यद् दृष्टमध्यारोपं विशेषणम् ।
अपवादे तु नोपाधिर्जीवाऽऽत्मपरमात्मनोः ॥३८०॥

शिष्यः –
श्रुतो गुरुमुखादद्य जीवाऽऽत्मपरमात्मनोः ।
यत्प्रातिपदिकार्थश्च तत्त्वं शोधितयोरपि ॥३८१॥

गुरोराज्ञापितं चैतज्जगदारोपितं हि यत् ।
तद् ब्रह्मण्यपवादे तु शुद्धं चिदवशिष्यते ॥३८२॥

मायाऽबुद्धं गुरो ! चैतज्जिज्ञासा वर्धिता पुनः ।
शुश्रूषाऽस्त्येव मनसि चाज्ञापयतु सारतः ॥३८३॥

गुरुः –
नेति नेति द्विवारं यत् श्रुतिरादिशति क्रमात् ।
अतद् वस्तुनि यद् दृष्टमध्यारोपनिवारणे ॥३८४॥

दृष्टो रज्जौ यथा सर्पः स्वप्नतुल्यः क्षणादसत् ।
उपाधिजन्यमुभयं हीनोपाधौ तु शुद्धचित् ॥३८५॥

असंभवोऽस्त्यभिधया जीवात्मपरमात्मनोः ।
भागत्यागलक्षणया त्वेतयोरैक्यसम्भवः ॥३८६॥

'तत् त्वं असि' महावाक्यं दृष्टान्ते सुविचारिते ।
'तत् त्वं' पदद्वयं त्याज्यं क्रियायां चिद् हि तिष्ठति ॥३८७॥

'सोऽयं' पदद्वयेऽपीह देवदत्तो विशिष्यते ।
'सोऽयं' पदद्वये त्यक्ते देवदत्तो हि शिष्यते ॥३८८॥

इत्थं भागत्यागकृते चिदेको ह्यवतिष्ठते ।
ऐक्यबोध्यं महावाक्यं जीवाऽऽत्मपरमात्मनोः ॥३८९॥

शिष्यः –
महावाक्यस्याऽयमर्थो बुद्धौ मे नाऽवतिष्ठते ।
ऐक्यवाच्यं महावाक्यं जीवात्मपरमात्मनोः ॥३९०॥

कष्टं न बुध्यतेऽर्थोऽयं कथं मुक्तो भवाम्यहम् ।
याचेऽहमाशिषं बोद्धुं श्रीगुरोः करुणानिधेः ॥३९१॥

यावच्च श्रूयतेऽर्थोऽयं तावत् तावद् गभीरताम् ।
प्रयाति मननाऽभ्यासादपि नैवाऽनुभूयते ॥३९२॥

गुरुः –
नारिकेलसमाकारो वेदान्तः कथ्यते जनैः ।
पयः पानार्थमन्तःस्थं स्फोट्यं बाह्यस्थवल्कलम् ॥३९३॥

आचार्याय च शास्त्राय श्रद्धां विश्वासमर्पय ।
दृढमात्मबलं कृत्वा शास्त्रे स्वाध्यायमाचर ॥३९४॥

हित्वा कुण्ठं च नैराश्यं लक्ष्यं मोक्षे निवेशय ।
तीव्रवैराग्ययुक्तस्त्वं कुरुष्वाऽऽत्मविचिन्तनम् ॥३९५॥

**नित्यं स्वाध्याययुक्तस्त्वं वेदान्तश्रवणं कुरु ।**
**स्वदेहं क्षणिकं ज्ञात्वा जगन्मिथ्येति चिन्तय ॥३९८॥**

श्रुत्वैनं मननं कुर्या निदिध्यासनमन्ततः ।
जन्मजन्मान्तरं याप्याऽन्तिमे मोक्षफलं मिलेत् ॥३९९॥

मनसो वासनाकामसंस्कारा यान्ति दूरतः ।
भ्रमादयस्तमोऽध्यासाः सर्वे निर्यान्ति निश्चितम् ॥४००॥

ब्रह्माऽऽत्मैवेति बोद्धव्योऽन्ये दृश्या व्यावहारिकाः ।
संसर्गाऽध्यासतो देहाद्याश्चैवाऽऽत्माऽभिसंज्ञिताः ॥४०१॥

विज्ञातास्त्रय आत्मानो वेदान्ते व्यवहारतः ।
मुख्यो गौणस्तथा मिथ्या बोद्धव्याश्चेह वस्तुतः ॥४०२॥

जीवाऽत्मा मुख्य आत्माऽस्ति गौणः पुत्रकलत्रयोः ।
देहात्मभावो मिथ्याऽस्ति वाचारम्भणमात्रकम् ॥४०३॥

शिष्यः –

ब्रह्मणो भावना काऽस्ति ? शुश्रूषाऽस्ति गुरो ! मयि
को निषेधो विधिः कश्च गुरो ! मामनुकम्पय ॥४०४॥

गुरुः –

ब्रह्मज्ञानार्थमेवैतौ निर्दिष्टौ श्रुतिभिरिमौ ।
विधिनिषेधौ द्वौ मार्गौ बौद्धव्यौ साम्प्रतं त्वया ॥४०५॥

'अस्थूलमनणु' एभिः श्रुतिवाक्यैर्निषिध्यते ।
शेषं यत्तिष्ठति तत् स्याद् यथार्थं ब्रह्म तत्त्वतः ॥४०६॥

निषेधशेषं यत्तिष्ठेदद्वयं ब्रह्म विद्धि तत् ।
विध्यात्मकोऽस्ति निर्देशः 'अहं ब्रह्माऽस्मि' निर्भयम् ॥४०७॥

मृत्पात्रेषु विभिन्नेषु मृदो नाऽन्यद् विरच्यते
तथा सतो जगत् सृष्टं सद्भिन्नं जगतीह किम् ॥४०८॥

हे सौम्य ! त्वं सदाऽऽत्माऽसि त्रिकालव्यापिनी चितिः ।
विधेयरूपेणैवाऽस्मान् श्रुतिस्तूपदिशत्यहो ! ॥४०९॥

यथा जागरिते स्वप्नसंसारो नैव भासते ।
तथा मायिकसंसारो मिथ्याऽयमवभासते ॥४१०॥

जातिर्नामादिवर्णाद्या मायिकाः सन्ति भावय ।
मायाविकारास्ते सर्वे 'सद्ब्रह्माऽस्मी'ति चिन्तय ॥४११॥

माया तत्कार्यमेवैतदवाङ्मनसगोचरम् ।
भावय त्वं सदैवैतद् दृश्यते ज्ञानचक्षुषा ॥४१२॥

**'या' दृश्यते व्यवहृतौ सम्पद्दारसुतादिकम् ।**
**तत्सर्वं वस्तु नास्त्येव 'मा' शब्दार्थं विभावय ॥४१३॥**

तत् तु चिद्घनमानन्दं स्वयं ज्योतिः परात्परम् ।
अन्तश्चित्ते चकास्ते यत् तदेव त्वं विभावय ॥४१४॥

क्षुत्पिपासादयस्ताः षडूर्मयः स्वच्छमानसे ।
ध्यायन्ति योगिनो नित्यं स्वबुद्धौ त्वं विभावय ॥४१५॥

अस्ति ब्रह्मेन्द्रियातीतमवाङ्मनसगोचरम् ।
तद् ब्रह्माऽस्ति परं सच्चिदहमस्मीति भावय ॥४१६॥

अध्यासरूपः संसारोऽस्तीह भ्रान्तिविनिर्मितः ।
सर्वं मायाकल्पितं हि शक्रजालिकवैभवम् ॥४१७॥

भिन्नं सदसतोर्ब्रह्म चित् परात्परमस्त्यहो !
सच्चिदाऽऽत्मा पराऽऽनन्दः स्वयमस्मीति भावय ॥४१८॥

जन्मवृद्धिविकारादिशून्यमव्ययमक्षरम् ।
सृष्ट्यादिकर्माधारं तद् ब्रह्माऽस्मीति विभावय ॥४१९॥

समस्तभेदशून्यं तद् रसरूपं चिदव्ययम् ।
सोऽहं ब्रह्माऽस्मि सत्तत्त्वं विद्धि निर्मलमव्ययम् ॥४२०॥

अद्वयं ब्रह्म सद्वस्तु तदुपादानकारणम् ।
सोऽहं ब्रह्माऽस्मीति विद्धि भवति भ्रमवारणम् ॥४२१॥

अखण्डमविनाशि चिन्निर्विकल्पं विलक्षणम् ।
क्षरादक्षरतोऽप्यूर्ध्वं ब्रह्मणः कुरु चिन्तनम् ॥४२२॥

निर्विकारं स्वयं ब्रह्म भूषणानीव स्वर्णतः ।
नामरूपादिभिः साक्षाद् विकारमिव लक्ष्यते ॥४२३॥

यतः परं नास्ति किञ्चित् स्वप्रकाशं परात्परम् ।
प्रत्यग्रूपं परंब्रह्म सोऽहमस्मीति भावय ॥४२४॥

पञ्चभूतात्मसंघातमध्येऽस्ति यत् परात्परम् ।
प्रतिविम्बात्मकं ब्रह्म सोऽहमस्मीति भावय ॥४२५॥

गुहायां बुद्धिरूपायां परं सदसतोऽपि यत् ।
वसन् सच्चित् स्वरूपं तद् ब्रह्माऽस्मीति विभावय ॥४२६॥

शिष्यः –
आत्माऽनात्माऽनयोर्भेदं श्रुतं गुरुमुखादिह ॥
कर्तृत्वादिकमज्ञानं न जहाति मनो मम ॥४२७॥

कर्माशयं तथाऽज्ञानं वासनाः सन्ति चाऽऽत्मनि ।
देहाऽभिमाने जीवेऽस्मिन् कथं नश्यन्ति मां वद ॥४२८॥

गुरुः –
अनादिवासना सैषा संसारे सारयत्यहो !
कर्तृत्वाद्या अहङ्कारा उद्यन्ति यत एव हि ॥४२९॥

अन्तर्मुखस्त्वं स्वां बुद्धिं निर्भयां कुरु निर्मलाम् ।
वसेः स्वात्मस्वरूपे चेद् वासना यान्ति संक्षयम् ॥४३०॥

कृते सति तदभ्यासे ज्ञानाग्नौ निपतच्छनैः ।
वासनात्मकमज्ञानं स्वयं नश्यति संज्वलत् ॥४३१॥

भस्मीभूता यदा यान्ति संस्कारा वासनात्मिकाः ।
जीवन्मुक्तो भवेत् सत्यं ब्रह्मविज्जीविते सति ॥४३२॥

शिष्यः –

अहं ममाऽनयोर्भावः कस्मादायाति हे गुरो !
कोऽयं किं तत्त्वमस्तीह कथमस्य निवारणम् ॥४३३॥

गुरुः –

अभ्यासजन्यौ द्वावेताऽहंममौ स्तः सुदुर्जयौ ।
ब्रह्माऽऽत्मज्ञानद्वारैवाऽनयोर्भवति संक्षयम् ॥४३४॥

लोकः शास्त्रं च देहात्मवासनाभिः समावृतम् ॥
यथार्थज्ञानं सम्पूर्णमवरुद्धं भवत्यहो ! ॥४३५॥

संस्कारा वासनाश्चैता हस्तपादादिषु नृणाम् ।
सत्यं निगडयन्त्येव मुक्ते मुक्ता भवन्त्यहो ! ॥४३६॥

अन्तः करणसंलिप्तं वासनाऽऽप्तमतद्गुणम् ।
ब्रह्मचिन्तनज्ञानाग्निद्वारा नश्यति तत्क्षणम् ॥४३७॥

अनात्मभिर्वासनाभिरावृता स्वात्मवासना ।
नित्यात्मकैरात्मनिष्ठैर्ज्ञानैर्नश्यति निश्चितम् ॥४३८॥

यदा यावद् यत्र सत्यं मनोऽन्तर्मुखमेति च ।
तदाऽऽत्मवासनाद्वारा स्वात्मज्ञानमुपैति च ॥४३९॥

शिष्यः –

अध्यासोऽयं कथं नश्येन्मनो नश्येत् कथं गुरो !
आज्ञापयतु मामेतद् विक्षिप्तं मे मनोऽधुना ॥४४०॥

गुरुः –

मनोऽवरुध्य विक्षिप्तमात्मनश्चिन्तनं कुरु ।
भवेन्नष्टा वासना ते विनश्येच्चचञ्चलं मनः ॥४४१॥

तावत् सत्त्वरजोभ्यां त्वं तमसो बाधनं कुरु ।
सत्त्वेन नश्येत रजः सत्त्वं सत्त्वेन बाध्यते ॥४४२॥

देहं पात्येव प्रारब्धमिति मत्वा सुनिश्चितः ।
धैर्यधारणया सार्द्धमध्यासं त्वमधिक्षिप ॥४४३॥

'अहं न जीवो ब्रह्माऽस्मि' त्वमिमां धारणां कुरु ।
वासनात्रयसम्प्राप्तमध्यासं त्वमधिक्षिप ॥४४४॥

श्रुतिभिर्युक्तिभिश्चैव स्वकीयैरनुभूतिभिः ।
'अहमात्मे'ति विज्ञाय तमध्यासमभिक्षिप ॥४४५॥

प्रारब्धलब्धो देहोऽयं ज्ञानिभिर्धार्यतेऽनिशम् ।
कर्तव्यशेषो नाऽस्त्येव त्वमध्यासमवक्षिप ॥४४६॥

तत्त्वमस्यादिकैर्वाक्यैर्ब्रह्मात्मैक्यं प्रबोधताम् ।
ब्रह्मात्मज्ञानभावेन त्वमध्यासमवक्षिप ॥४४७॥

अहंभावोऽस्य देहस्य यावन्नष्टो भवेन्न हि ।
सावधानमना तावत् त्वमध्यासमवक्षिप ॥४४८॥

शिष्यः –
अज्ञानरूपोऽध्यासोऽयं कतिकालः स्थिरो भवेत् ।
आज्ञापयतु मामद्य कथमस्तं भविष्यति ॥४४९॥

गुरुः –
देहादस्मादहंभावो यावन्नष्टो भवेन्न हि ।
सावधानमना भूत्वा त्वमध्यासमवक्षिप ॥४५०॥

यावन्न गन्तेदं भानं जीवस्य जगतो हृदः ।
तावत् संलग्नमनसा त्वमध्यासमभिक्षिप ॥४५१॥

शिष्यः –

यावन्न नश्येदध्यासो ब्रह्मज्ञानमसम्भवम् ।
नश्येदपि कथं भूयाद् ब्रह्मात्मज्ञानसम्भवम् ॥४५२॥

आत्मज्ञानं विनाऽध्यासो न दूरमपगच्छति ।
यावन्न गच्छेदध्यासो तावद्ज्ञानं भवेन्न हि ॥४५३॥

अध्यासज्ञानयोरत्राऽन्योन्याश्रयं विभासते ।
ब्रह्मज्ञानं कथं भूयात् सन्देहोऽस्ति गुरो ! मयि ॥४५४॥

गुरुः –

मातृपितृमलोद्भूतं शरीरं मलमांसयोः ।
चाण्डालतुल्यमस्पृश्यं ब्रह्माऽस्तित्वे पवित्रितम् ॥४५५॥

भिन्नोऽपि च घटाकाशो महाकाशांश एव हि ।
परमात्मांश एवाऽयं शरीरे संस्थितेऽपि च ॥४५६॥

स्वप्रकाशोऽप्यधिष्ठानं सोऽयं ब्रह्म विभावय ।
ब्रह्माण्डादिह पिण्डाण्डं मलभाण्डमिव त्यज ॥४५७॥

अहंभावोऽस्ति देहाऽऽत्मा शरीराद् भिन्न एव हि ।
असङ्गोऽयमिति ज्ञात्वा नित्याऽऽनन्दोऽस्मि चिन्तय ॥४५८॥

**देहाऽऽत्मभावं सन्त्यज्य स्वाऽऽत्मभावं विभावय ।**
**आत्माऽऽनन्दोऽहमित्युक्त्वा जीवन्मुक्त इवाऽऽचर ॥४५९॥**

शिष्यः –

हे ब्रह्मन् ! किमहं तत्त्वमस्य ज्ञानं कथं भवेत् ?
कथमस्य भवेत् त्यागः त्यक्त्वेदं गृह्यतेऽनु किम् ? ॥४६०॥

गुरुः –

अहम्भावस्तु मिथ्याऽस्ति स साक्षी न हि सम्भवेत् ।
'इदं सर्वमहं जाने' वक्तुं संभवति कथम् ? ॥४६१॥

अहङ्कारादिनां साक्षी सोऽयमात्मा सुषुप्तिषु ।
'अजो नित्यःशाश्वतोऽयं' श्रुत्या चैवं निगद्यते ॥४६२॥

अहमाद्या विकारास्ते सर्वदाऽहं न तिष्ठते ।
तिष्ठत्याऽऽत्मा सदा साक्षी तेषां भवति निश्चितम् ॥४६३॥

अभिमानं जहीहि त्वमहं तु बुद्धिकल्पितः ।
ब्रह्माऽबाध्यं त्रिकालेऽस्ति तत्र त्वं सुस्थिरो भव ॥४६४॥

जहाहि कर्तृत्वरसं कुलगोत्राद्यहङ्कृतिम् ।
देहाऽभिमानं सन्त्यज्य ताताऽऽनन्दमयो वस ॥४६५॥

शिष्यः –

अहम्भावं तु ब्रह्मज्ञा निन्दन्त्येव हि सर्वदा ।
कथं जहात्यहंभावस्तं विनिन्द्यैव सर्वदा ॥४६६॥

गुरुः –

प्रतिबन्धसहस्राणि संसारे भ्रामयन्त्यपि ।
'अहमज्ञानसंसृष्टो' जीवानां मुख्यबन्धनम् ॥४६७॥

अहंभावेन सम्बन्धस्तिष्ठति यावदात्मनः ।
प्रशस्तो न भवेत्तावन्मुक्तिमार्गस्तदात्मनः ॥४६८॥

अहङ्कारो राहुरूपो यदा दूरं गमिष्यति ।
जीवाऽऽत्मा पूर्णचन्द्रोऽयं तदा निर्मलमेष्यति ॥४६९॥

अज्ञानजातोऽहङ्कारो देहाऽऽत्मा मन्यते स्वकम् ।
यदाऽहं नाशमायाति जीवो ब्रह्माऽभ्युपैत्यहो ! ॥४७०॥

शिष्यः –

अहन्तायाः कथं नाशो ? गुरो ! वदतु मामिह ।
जडचेतनयोर्ग्रन्थिं कथं मुञ्चेत् स्वदेहतः ॥४७१॥

गुरुः –

त्रिशिखी सर्पिणी ह्यस्ति ब्रह्मसद्धनमावृता ।
यः सपिणीं नाशयति सैव सद्धनमाप्नुयात् ॥४७२॥

नैव स्वस्थं शरीरं स्याद् यदि किञ्चिद् विषस्थितौ ।
मुक्तो नैव मुमुक्षुः स्यादविद्यालेशसंस्थितौ ॥४७३॥

अहङ्कारो यदा नष्टस्तद्विकारश्च नश्यति ।
तदा ब्रह्माऽस्मीति बोधे मुमुक्षुर्मुक्तिमेष्यति ॥४७४॥

अहमस्य चिदाभासो व्यावृत्तस्तद्विकारतः ।
स्वस्वरूपं न दृश्येत तत् तेनाऽऽवरणीकृतम् ॥४७५॥

अत एवाऽद्य हे सौम्य–जहिहि तदहं भृशम् ।
त्वं तु बोधस्वरूपोऽसि आत्माऽऽनन्दः परात्परः ॥४७६॥

अहं सृष्टस्तदध्यासस्तस्मादस्ति भयङ्करः ।
भ्रामयन् सर्वभूतानि दुःखीयति निरन्तरम् ॥४७७॥

त्वं चिदात्मा सच्चिदसि साऽऽनन्दोऽसि च निर्गुणः ।
किन्त्वनात्मनि देहादौ ह्यात्मबुद्धिं करोष्यहो ! ॥४७८॥

कण्ठकण्टकतुल्योऽस्ति सज्जनानामहंरिपुः ।
ज्ञानाग्नौ दाहयित्वा तं तर संसृतिसागरम् ॥४७९॥

'अहं कर्ता'द्यहङ्कारं प्रथमं जहितादतः ।
अनासक्त्या कर्मयोगान्मोक्षमार्गं तु लप्स्यसे ॥४८०॥

**रागनिर्मुक्तकण्ठाद् य आत्माऽऽनन्दं प्रगायति ।**
**स सानन्दो नरीनर्ति निर्बन्धो ब्रह्मचत्त्वरे ॥४८१॥**

शिष्यः –
जीवनं सार्थकं जातं कृतकृत्योऽस्मि साम्प्रतम् ।
जिज्ञासा वर्द्धिता ब्रह्मन् ! शुश्रूषाऽपि समागता ॥४८२॥

गुरुः –
अतीव रम्या जिज्ञासा वत्स ! तेऽस्ति सुनिश्चिता ।
वासनाया भरो नास्ति सैषा जिह्माऽप्यनिश्चिता ॥४८३॥

प्रमाद उदिते चित्ते सैषा विशति सत्त्वरम् ।
विक्षेपमपि सोत्पाद्य सज्ज्ञानमपि नाशयेत् ॥४८४॥

चित्तं मेघायितं चेत् तेऽहङ्कारः पवनायते ।
वर्षाया निर्झरी तुल्या वासना प्लावयत्यपि ॥४८५॥

अहंकारः शत्रुरूपो यदि नश्येच्छनैः शनैः ।
उत्थितुं नैव दद्यास्तं सावधानमना भव ॥४८६॥

भवेच्चेद् विषयाऽध्यासः पुनर्जीवनमेष्यति ।
शुष्कोऽपि जाङ्गुलो वृक्षः प्लाविते पल्लवायते ॥४८७॥

यस्य देहात्मबुद्धिश्चेत् कामना पल्लवायते ।
सज्ज्ञानी लालसाशून्यश्चेत् कथं कामुकायते ॥४८८॥

कार्यबुद्धिर्भवेच्चेत् तद् बीजवृद्धिश्च सम्भवेत् ।
कार्यनाशो भवेच्चेत् तद् बीजवृद्धिर्न सम्भवेत् ॥४८९॥

वासनायां वर्द्धितायां कामना परिवर्द्धते ।
कामे वृद्धेऽपि तद्धेतोर्वासना परिवर्द्धते ॥ ४९०॥

अन्योन्यमेतयोर्वृद्ध्या जायते भवबन्धनम् ।
अतोऽनासक्तबुद्ध्या त्वमात्माऽऽनन्दमयो भव ॥४९१॥

क्रियां च विषयाध्यासं त्याज्यं सत्वरमेव हि ।
मुक्तिकामो मुमुक्षुस्त्वं नित्यमेतद्द्वयं स्मर ॥४९२॥

हे सौम्य ! बाह्यक्रियया सार्धं विषयचिन्तनम् ।
त्याज्यं द्वाभ्यां भवत्येव वासनायाः प्रवर्द्धनम् ॥४९३॥

शिष्यः –
क्रियाचिन्तावासना च कथं त्याज्यं गुरो ! त्रयम् ।
आज्ञापयतु सुस्पष्टं शुश्रूषा वर्द्धिता मम ॥४९४॥

गुरुः –
चिन्तनं वर्द्धते बाह्यक्रियया सह वासना ।
वासनायां वर्द्धितायां वर्द्धते भवबन्धनम् ॥४९५॥

सर्वदाऽपि च सर्वत्र कर्तव्यं ब्रह्मचिन्तनम् ।
ब्रह्मात्मवासनाद्वारा त्यज्यते लोकचिन्तनम् ॥४९६॥

क्रियानाशे भवत्येव चिन्ताया अपि सङ्क्षयम्
तत्पश्चात् वासना नश्येद् जीवन्मुक्तिस्तु निर्भया ॥४९७॥

शिष्यः –
वासनाः कतिद्या ब्रह्मन् ! नाशमेष्यन्ति ताः कथम् ?
आचार्या अपि शास्त्राणि त्याज्याः प्रणिगदन्ति ताः ॥४९८॥

वासनाऽस्ति शुभा तावदशुभा द्वितया परा ।
प्रथमा ब्रह्मचिन्ताऽस्ति साऽन्या विषयचिन्तना ॥४९९॥

ब्रह्मणो वासना वृद्धौ भ्रमोऽहङ्कारवासना ।
सामानाऽधिकरण्यं न तेजस्तिमिरयोर्भवेत् ॥५००॥

यथा सूर्योदये यान्ति नैशाऽनर्थास्तथा भ्रमाः ।
तथा ब्रह्माऽनुभूत्या तु हीयन्ते बन्धनान्यपि ॥५०१॥

शिष्यः –
ज्ञानी ब्रह्मज्ञविदुषि वर्द्धतेऽहं प्रमादता ।
उपदेशं प्रकुर्वन्ति 'अहङ्कारान् मदान् त्यज' ॥५०२॥

गुरुः –
प्रमादो ब्रह्मनिष्ठेषु कर्तव्यो नेति चिन्तनम्
कथा सनत्सुजातीया पठितव्या त्वयाऽधुना ॥५०३॥

प्रमादो मृत्युसदृशः संसारे भ्रामयत्ययम् ।
ब्रह्मनिष्ठे तु विदुषि न प्रमादः स्थिरो भवेत् ॥५०४॥

प्रातःकालात् समारभ्य कुर्याद् वेदान्तचिन्तनम् ।
यावद्दिनं न कामादौ मनसि स्यात् प्रसन्नता ॥५०५॥

शिष्यः –
प्रमादात् किं भवत्यत्र स तु त्याज्यः कथं गुरो !
शुश्रूषा वर्द्धिता ब्रह्मन्नाज्ञापयतु मामिह ॥५०६॥

गुरुः –
अहम्भावो यस्य नास्ति बुद्धिर्न विचलिष्यति ।
जीवन्मुक्तो भवेज्ज्ञानी ब्रह्म सर्वत्र पश्यति ॥५०७ ॥

यो भवेद् विषयाऽऽसक्तो यस्याऽऽत्मविस्मृतिर्भवेत् ।
कुलटाऽऽसक्तजनवद् गर्ते स निपतिष्यति ॥५०८॥

जलनीलीं बहिः क्षिप्ते यथा कूपजलाज्जलम् ।
निर्मलं प्राप्यतेऽत्रापि ह्यासक्तिर्ब्रह्मवारणी ॥५०९॥

तथैवाऽत्रापि जिज्ञासुर्भवेद्यदि बहिर्मुखः ।
तं वारयति माया हि भ्रष्टा बुद्धिर्भवेद् यदि ॥५१०॥

यद्यस्ति ब्रह्मविमुखं चित्तं नीचैः पतत्यहो !
विदूरं क्रमशो याति सोपानात् कन्दुकं यथा ॥५११॥

विषयं ध्यायति यदि तत्राऽऽसक्तिर्विवर्द्धते ।
आसक्त्या वर्द्धते कामः कामाल्लोभोऽभिवर्द्धते ॥५१२॥

तन्न चेत् क्रोध आयाति क्रोधान्मौढ्यं विवर्द्धते ।
स्मृतिभ्रंशो भवेत् तस्माद् बुद्धिनाशस्ततो भवेत् ॥५१३॥

यदि स्याद् बुद्धिनाशस्ते बुद्धिनाशात् प्रणष्यसि ।
पथभ्रष्टस्ततो भूया दुश्चक्रे त्वं पतिष्यसि ॥५१४॥

शिष्यः –
ब्रह्मन् ! बोद्धुमशक्तोऽहं केयं दुश्चक्रसंसृतिः ?
कथं विवर्द्धतेऽस्माकं दुरन्तेयमपस्मृतिः ॥५१५॥

गुरुः –
क्लिष्टां तां कामनां सर्वां चित्तं चिन्तयते क्रमात् ।
यतो हि विषयासक्तं मनस्तुच्छं विचिन्तयेत् ॥५१६॥

यदि चेतति संसारं संसारे सरते जनः ।
तेनैव वासनावृद्धिस्ततः कामोऽभिवर्द्धते ॥५१७॥

आत्मस्वरूपं विस्मृत्य कामनातृप्तये जनः ।
कुरुते विषयाऽऽसक्तः दुष्कर्माणि निरन्तरम् ॥५१८॥

ततः पतनमेव स्याज्जनो नोन्नतिमाप्नुयात् ।
अतः सौम्य ! जहीहि त्वं दुर्मीतिं दुष्कृतिं भृशम् ॥५१९॥

भ्रमाऽज्ञानं हि संरक्ष्य प्रमादमृत्युमाप्नुयात् ।
अन्तर्मुखः सदा भूत्वा ज्ञानान्मोक्षमवाप्नुयात् ॥५२०॥

शिष्यः –

शास्त्रं तु भयनाशार्थमादेशं कुरुतेऽनिशम् ।
आज्ञापयतु मामद्य भयनाशः कथं भवेत् ॥५२१॥

गुरुः –

भेदं करोति यो नित्यं जीवात्मपरमात्मनोः ।
तत एव भयं प्राप्य म्रियते स भयेन हि ॥५२२॥

द्वैतबुद्धिर्भवेद् यत्र तत्रोदेति भृशं भयम् ।
अद्वैतबुद्धिमात्रेण भयत्रासः पलायते ॥५२३॥

वेदे समुल्लिखितवान् याज्ञवल्क्योऽब्रवीदिदम् ।
'राजन्न भीतोऽस्ति भवान्' जनकं समुपादिशत् ॥५२४॥

श्रुतिवाक्यं निगदति– 'ब्रह्मैवाऽभयमस्त्यहो !
भयं नाशय हे सौम्य ! ब्रह्मण्येवाऽभये वस ॥५२५॥

भेदबुद्धिः क्वचिच्छिष्टा तस्या अपि भयं भवेत् ।
अभेदबुद्ध्या साकं त्वं सुस्थिरो भव निर्भयः ॥५२६॥

जीवन्मुक्तो भवेद् यो हि पश्चादपि स मुच्यते ।
श्रुतिर्गदति भेदाद्धि भयमुत्पद्यते भृशम् ॥५२७॥

यो जीवब्रह्मणो भेदद्रष्टा विद्वानपि क्षणात् ।
प्राप्नोति भयमत्यन्तं प्रमादो मुख्यकारणम् ।।५२८।।

'देह आत्मे'ति कथनं हेयं शास्त्रेऽपि दृश्यते ।
देहाऽऽत्मवादिनः सत्यं दुःखीयन्ति चिरन्तनम् ।।५२९।।

चिदात्मानं चिन्तकस्तु ब्रह्माऽद्वैतं हि विन्दति ।
देहात्मवादी योऽज्ञानी सोऽन्ते नाशमुपैत्यहो ! ।।५३०।।

त्वमसच्चिन्तनं हित्वा ब्रह्मैवाऽहं सुचिन्तय ।
आत्मानुभूतिं यः कुर्यात् स गच्छेद् ब्रह्मणि स्थिरे ।।५३१।।

बहिर्मुखो न भूयास्त्वं भूया अन्तर्मुखः सदा ।।
दुर्वासनां विहायाऽद्य कुर्याः सद्ब्रह्मचिन्तनम् ।।५३२।।

।। इत्युपनिषत्कारिकायां ग्रन्थारम्भः ।।

ॐ तत्सद्ब्रह्मणे नमः

# ईशावास्योपनिषत्कारिका

ईशिता सर्वभूतानां सर्वभूतमयश्च यः ।
ईशावास्येन सम्बोध्यमीश्वरं तं नमाम्यहम् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥
ॐ शान्तिः । ॐ शान्तिः । ॐ शान्तिः ।

नाऽऽत्मा विकार्य उत्पाद्य आप्यः संस्कार्य इत्यपि ।
अनेकत्वं च कर्तृत्वं भोक्तृत्वं नाऽत्र युज्यते ॥१॥

मुमुक्षुत्वेऽधिकारित्वमवश्यमुपपद्यते ।
वेदान्तविषये कर्तुः सम्बन्धमुपयुज्यते ॥२॥

ज्ञात्वा सुस्पष्टमुद्देश्यं सम्बन्धं सप्रयोजनम् ।
वेदान्ते निश्चयं कृत्वा सानुबन्धचतुष्टयम् ॥३॥

स्थावरं जङ्गमं दृश्यं यद्यस्ति जगतीह यत् ।
ईशावाश्यमिदं सर्वं विवर्तं ब्रह्मणो हि तत् ॥४॥

ईशच्छाद्यं सर्वमेतज्जगदीशस्य बोध्यताम् ।
अतो लोभो न कर्तव्यः परस्य धनसम्पदि ॥५॥

शिष्यः –
एषणात्रयमेवैतत् त्याज्यमात्मविदा सदा ।
ततो भूत्वा ज्ञाननिष्ठ आत्मज्ञानं चिकीर्षतु ॥६॥

परन्तु ज्ञाननिष्ठायां सक्षमो नाऽस्मि हे गुरो !
ब्रवीतु कमुपायं स्याद् येनाऽज्ञानं विनश्यति ॥७॥

गुरुः –
कर्माणि कुर्वन्नेवेह जिजीविषेच्छतं समाः ।
एवं कर्मकृते मुक्तो भवेत् पापैर्न लिप्यते ॥८॥

विनिन्दन्त्यः सदाऽज्ञानं श्रुतयः कथयन्त्यपि ।
असुर्यानामके लोके पतन्त्यज्ञाः सदा भृशम् ॥९॥

आत्मज्ञानं विना ये तु म्रियन्ते चेन्नरा भुवि ।
ते तु प्रेत्याऽभिगच्छन्ति लोके हि तमसाऽऽवृते ॥१०॥

श्रुतिर्वदति चैताँस्ते जना आत्महनो भुवि ।
आत्मज्ञानं विना मर्त्या गच्छन्ति प्रेतमन्दिरम् ॥११॥

जायते म्रियते नित्यमात्महा यो नरो भुवि ।
आत्महा न भवेज्ज्ञानी स मुक्तः पारमेष्यति ॥१२॥

शिष्यः –
किमेतदात्मतत्त्वं स्याद् गुरो ! वदतु लक्षणम् ।
मुक्तो भवति चाऽऽत्मज्ञो यज्ज्ञात्वा न निवर्तते ॥१३॥

गुरुः –
आत्मतत्त्वं चिरस्थायि मनसोऽपि भृशं द्रुतम् ।
कर्मेन्द्रियैरगम्यं तद् व्यापकं श्रुतिविश्रुतम् ॥१४॥

प्राणिनः कुर्वते कर्म शक्तिं प्राप्याऽऽत्मनो भृशम् ।
तत्सत्त्वे सति संसारसत्तां चलति सर्वथा ॥१५॥

आत्मतत्त्वं चलत्येतदारात् सर्वत्र वायुवत् ।
बाह्यमाभ्यन्तरं सुस्थं न दृष्टमनुभूयते ॥१६॥

सत्तां चराचरस्यापि ह्यनेन प्रचलत्यमुम् ।
तत्सत्त्वे सति संसारसत्ता चलति सर्वथा ॥।१७॥

भूते पश्यति चात्मानं भूतं पश्यति चात्मनि
अत एव स आत्मज्ञोः घृणां न कुरुते क्वचित् ॥१८॥

ज्ञानी पश्यति चात्मानं सर्वस्मिन्नपि सर्वतः ।
शोकमोहौ तत्र न स्तः सैकत्वमनुपश्यति ॥१९॥

शिष्यः –
षड्भिः श्लोकैरिह प्रोक्तमात्मतत्त्वस्य वर्णनम् ।
किं तस्य लक्षणं ब्रह्मन् ! मनो मे ज्ञातुमुत्सुकम् ॥२०॥

गुरुः –
अशरीरी मनीषी स आत्मा शुद्धोऽस्ति सर्वगः ।
स्नायुहीनोऽपि सर्वज्ञः सर्वद्रष्टाऽस्ति सक्षमः ॥२१॥

सर्वोत्कृष्टः स्वयम्भूः स आत्माऽत्यन्तोऽस्ति निर्मलः
प्रजापतिभ्योऽवितरद् यथा कर्म तथा फलम् ॥२२॥

शिष्यः –
गुरो ! किमस्ति पार्थक्यं ज्ञातुमिच्छामि सर्वथा ।
अविद्याविद्ययोर्ब्रह्मन् ! कृपया तद् वदस्व माम् ॥२३॥

गुरुः –
अविद्यारूपकर्माणि नित्यं यः कुरुते जनः ।
अन्धं तमः प्रविशति मिथ्याज्ञानाऽभिमानवान् ॥२४॥

विद्या विमुक्तये सिद्धा ह्यविद्या कर्म लौकिकम्
भिन्नं फलं तदुभयोर्भिन्नत्वे फलभिन्नता ॥२५॥

यो हि विद्यामविद्यां च जानात्येवोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥२६॥

ये हि नित्यमसम्भूतिमव्यक्तं समुपासते ।
तेऽन्धं तमः प्रविशन्ति यत्र ज्ञानं न भासते ॥२७॥

सम्भूतिमनुरक्ता ये मिथ्याज्ञानविमोहिताः ।
तेऽन्धं तमसि जायन्ते ह्यविद्याकर्मसंप्लुताः ॥२८॥

याऽव्यक्ता साऽप्यसम्भूतिर्मूला प्रकृतिरूपिणी ।
हिरण्यगर्भः सम्भूतिः कार्यब्रह्मस्वरूपिणी ॥२९॥

शिष्यः –
व्यक्तमव्यक्तमुभयोः कुरुते चेदुपासनाम् ।
जिज्ञासाऽस्तीह मे ब्रह्मन् ! तद् ब्रूतां किं फलं मिलेत् ॥३०॥

गुरुः –
सम्भूत्याश्च प्रकृत्याश्च फलं भिन्नं मिलेदिति ।
धीराणामुक्तिरेषाऽस्ति ये नस्तद् विचचक्षिरे ॥ ३१॥

एकपक्षे कार्यब्रह्म सम्भूतिर्गदिताऽस्ति चेत् ।
मूलप्रकृतिरव्यक्ताऽसम्भूतिः कथिताऽस्त्यहो ! ॥३२॥

असम्भूतिञ्च सम्भूतिं द्वयं ये समुपासते ।
असम्भूत्या मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥३३॥

शिष्यः –

हे गुरो ! दृश्यतेऽत्रैव ज्ञानकर्मसमुच्चयः ।
अनेन ज्ञानमार्गस्तु कथमुद्घाट्यते गुरो ? ॥३४॥

गुरुः –

प्रश्नः समुचितस्तेऽत्र ज्ञानकर्मसमुच्चयः ।
प्रवृत्तिं च निवृत्तिं च तत्रैवान्तरधीयते ॥३५॥

निवृत्तिमार्गचर्चा तु बृहदारण्यके मिलेत् ।
जिज्ञासा यदि ते सौम्य ! तत्र गत्वा स्वयं पठ ॥३६॥

केन मार्गेण प्राप्येत चामृतत्वं कथं कुतः ?
एतन्निर्दिश्यतेऽत्रैव त्वया बुद्धया प्रबुध्यताम् ॥३७॥

एतदर्थं प्रार्थयन्ते ज्ञानकर्मसमुच्चयाः ।
मनसा निश्चयो भूत्वा सौम्य ! त्वमवधारय ॥३८॥

आदित्यमण्डलाऽऽविष्टं ब्रह्मणो मुखमद्वयम् ।
हिरण्मयेन पात्रेणाऽपिहितं त्वमपावृणु ॥३९॥

त्वामहं प्रार्थये पूषन् ! तव रश्मीन्नवाकिर ।
अपावृणु पिधानं ते मामाऽऽत्मज्ञानहेतवे ॥४०॥

जगत्पोषक ! हे पूषन्नेकाकी सञ्चरस्यपि ।
यमतुल्यः कथं सर्वसंसारं तपसि भृशम् ॥४१॥

कल्याणमयरूपं ते दिदृक्षामि यथा तथा ।
तिग्मरश्मीन्नपावृणु सत्यधर्माय दृष्टये ॥४२॥

योऽसि त्वं सूर्यरूपस्थः सोऽहमस्मीति संवदन् ।
ज्ञानकर्मा प्रकुरुते भास्करस्तुतिवन्दनम् ॥४३॥

मुमुर्षुः सज्जनो धीमानन्त्ये प्रार्थयते यथा ।
श्रुतिरित्थं निगदति शृणु त्वमवधारय ॥४४॥

पूषन् ! इतो गताः प्राणा मिलन्तु पवने मम ।
शरीरमेतद् भस्मान्तं भस्मशेषः कलेवरः ॥४५॥

वायुरेवास्ति सूत्रात्मा प्राणा अस्मिन् मिलन्तु भो !
मोक्षद्वारं समुद्धाट्य यूयं ब्रह्मणि प्राप्नुत ॥४६॥

मनः सङ्कल्पकर्मात्मन् ! सन्ततं मामनुस्मर ।
सङ्कल्पञ्च विकल्पञ्च किं कृतं तन्मयि स्मर ॥४७॥

कृत्याऽकृत्यं यद् विहितं शान्तिं प्राप्य शनैः स्मर ।
मम प्राणान्तवेलेयं प्रायश्चित्तीबुभूषतु ॥४८॥

गमागमौ प्रकुर्वाणो दुश्चक्रे भृशमभ्रमम् ।
इतो भगव ! कैवल्यं मुक्तिं सद्गतिमाप्नुयाम् ॥४९॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥

॥ इति ईशावास्योपनिषत्कारिका ॥

ॐ तत्सद्ब्रह्मणे नमः

# केनोपनिषत्कारिका

येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु ।
तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम् ॥
यस्य पादांशुसम्भूतं विश्वं भाति चराचरम् ।
पूर्णानन्दं गुरुं वन्दे तं पूर्णानन्दविग्रहम् ॥

शान्तिपाठः

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु । ते मयि सन्तु ॥

ॐ शान्तिः ! शान्तिः!! शान्तिः!!!

शिष्यः –

कस्येच्छया प्रेरणया चलतीदं मनो भृशम् ।
इदं मनः स्वविषये लगति स्वविचारतः ॥१॥

कस्मात् प्रयुक्तः प्राणोऽयं केन सञ्चारितोऽस्त्यहो !
प्रेरितः केन वा प्राणी ब्रूते वचनविस्तरम् ॥२॥

गुरो ! कस्मादिदं चक्षुः श्रोत्रं चरति निर्भयम्
ब्रह्मन् ! कस्मादिन्द्रियाणि सर्वाणि प्रचलन्त्यहो ! ॥२॥

गुरुः –

महत्वपूर्णास्ते प्रश्नाः प्रसीदति मनो मम ॥
सारांशेन गदाम्येतत् सावधानमना शृणु ॥४॥

श्रोत्रस्याऽपि महच्छ्रोत्रं मनसोऽपि महन्मनः ।
प्राणानामपि यः प्राणो वचसामपि यद्वचः ॥५॥

चक्षुषामपि यच्चक्षुस्तज्ज्ञात्वा बन्धिता जनाः ।
भवन्ति ज्ञानिनोऽमर्त्या लोके निर्मुक्तबन्धनाः ॥६॥

शिष्यः –

नाऽबोधिषमहं ब्रह्मन् ! जिज्ञासा तु समेधिता ।
प्रहेलिकैषा समभून्मनोऽन्तः कीलितं मम ॥७॥

गुरो ! स्पष्टं निर्दिशतु सर्वमुद्बोधतां भवान् ।
कोऽयं सर्वं चालयति जगदेतच्चराचरम् ॥८॥

गुरुः –

त्वया साधु कृतः प्रश्नस्तज्ज्ञानमतिदुष्करम् ।
अति दूरं वरीवर्ति मनसो वचसोऽपि तत् ॥९॥

चक्षुषोर्गोचरं नैतदवाङ्मनसगोचरम् ।
साधनं नेह किमपि ब्रह्मनिर्देशकर्तृकम् ॥१०॥

अत एव ब्रह्म बोद्धुं वक्तुं चैव न शक्यते ।
कार्यकारणतो भिन्नं निर्देष्टुं नैव शक्यते ॥११॥

अन्ये पदर्था ज्ञायन्ते ब्रह्म न ज्ञायते परम् ।
पूर्वाचार्या अचकथन्-ब्रह्म ज्ञातुं न शक्यते ॥१२॥

हेयोपादेयमेतन्न ह्यात्मा ब्रह्म परात्परम् ।
विवर्तं ब्रह्मणोश्चैतद् द्रष्टा दृश्यं चराचरम् ॥१३॥

शिष्यः –

विशेषतोऽभूत् कठिनं बोद्धुं बोधे न बुद्ध्यते ।
कथं प्रबुद्ध्यते ब्रह्मन्नाऽऽज्ञापयतु मामिह ॥१४ ॥

गुरुः –

वाचाऽनभ्युदितं यत्तु येन वाणी प्रचोदिता ।
तदेव ब्रह्म विद्धि त्वमुपास्यं ब्रह्म तत् कथम् ? ॥१५॥

मनसा मननं यस्य भवति न कदाचन ।
ब्रह्मद्वारा हि मनसो मननं प्रभवेदिह ॥१६॥

तदेव ब्रह्म विद्धि त्वमात्मतत्त्वं परात्परम् ।
उपास्यं ब्रह्म नास्त्येतदुपास्ये त्वं यथा न तत् ॥१७॥

चक्षुषा दृश्यते नैतद् येन चक्षुः प्रकाशते ।
तदेव ब्रह्म विद्धि त्वमौपास्यं ब्रह्म नाऽन्यतः ॥१८॥

श्रोत्रेण नाऽऽकर्ण्यते यद् येन श्रोत्रं शृणोत्यहो ।
साक्षाद् ब्रह्म तदेवाऽस्ति श्रुतिर्गदति सन्ततम् ॥१९॥

यदेतत् त्रिपुटीयुक्तमुपास्यं ब्रह्म नैव तत् ॥
मायाविकारैर्यच्छून्यं ब्रह्माऽद्वैतं सनातनम् ॥२०॥

प्राणिति यन्न प्राणेन येन प्राणाश्चरन्त्यहो !
तदेव त्वं ब्रह्म विद्धि यदंशः सर्वसंस्थितः ॥ २१॥

देशकालपरिच्छिन्ना समुपास्याऽस्ति देवता ।
समुपास्यं ब्रह्म नैतच्छ्रुतिर्वदति सन्ततम् ॥२२॥

शिष्यः –

श्रुत्वा सदुपदेशं तेऽवबोधो भासते मयि ।
सुस्पष्टमभवत् सर्वं यथार्थं ब्रह्मवैभवम् ॥२३॥

गुरुः –

'सम्यग् ज्ञातं मया ब्रह्म' यदि त्वं वदसीह ते ।
अत्यल्पं ब्रह्मणो रूपं त्वं जानासीति बुद्ध्यते ॥२४॥

देवैस्तद्ब्रह्मणो रूपं यद् बुद्धं तदपि त्वया ।
न बुद्धं शेषमस्त्यस्य पूर्णं रूपं विभावय ॥२५॥

शिष्यः –
एकान्ते भावये चैकं जाने चैकमहं गुरो !
सम्यग्रूपेण नो जाने, न जानामीति वच्म्यहम् ॥२६॥

अत एव मया ब्रह्मन् ! ज्ञातं ब्रह्मेति मन्यते ।
गुरुः –
ज्ञात्वाऽपि ज्ञायते यन्न तज्ज्ञेयं ज्ञानमिष्यते ॥२७॥

न ज्ञायते ब्रह्म चैतद् यो ब्रूते स तु निश्चितम् ।
जानीते, ज्ञायते तत्तु येनोक्तं, नैव तेन तत् ॥२८॥

ज्ञात्वाऽपि न ज्ञायते तज् 'जानेऽहं' तन्निरर्थकम् ।
'अहं न जाने तद् ब्रह्म' यो ब्रूते तेन बुध्यते ॥२९॥

'ब्रह्म' मायिकदृश्यादिवस्तुवन्नैव दृश्यते ।
यतो वागादीन्द्रियाणि ज्ञातुं शक्तानि नैव तत् ॥३०॥

प्रत्येकं वस्तुनो बोधे ह्यात्मबोधो यदा भवेत् ।
तद् बोधो ब्रह्मबोधः स्यादस्ति भाति मतेन वै ॥३१॥

ब्रह्मज्ञानं तदेवास्ति तदेवाऽमृतमव्ययम् ।
आत्मनः प्राप्यते ब्रह्म तदेवाऽमृतमद्वयम् ॥३२॥

अज्ञानं विद्यया नष्टमविद्या ब्रह्मवारिणी ।
मुमुक्षुः शक्तिमाप्नोति ह्यविद्यानाशकारिणी ॥३३॥

अस्मिन् जन्मनि ते ब्रह्म ज्ञातं चेदस्ति मङ्गलम् ।
न ज्ञातं यदि तद् ब्रह्म हानिरत्यन्तमस्ति ते ॥३४॥

पश्यन् सर्वेषु भूतेषु सच्चिद् ब्रह्म सनातनम् ।
धीमान् भवति मुक्तात्मा ब्रह्मीभवति स स्वयम् ॥३५॥

ब्रह्मतत्त्वं नु दुर्ज्ञेयमिह कस्माच्च कारणात् ।
न शक्नुवन्ति तज्ज्ञातुं यत्नादपि न बुद्ध्यते ॥३६॥

विषयेऽस्मिन्नत्र चैकाऽऽख्यायिका श्रूयते श्रुतौ ।
गर्वो विनाशितो यस्माद् देवस्याऽपि च बुद्ध्यते ॥३७॥

ब्रह्माऽतीवाऽस्ति दुर्ज्ञेयं सारल्येन न बुद्ध्यते ।
श्रुतिः कथयतीत्येवमर्थवादेन दुष्करम् ॥३८॥

देवाः कदाचित् समये शक्तिसञ्चयगर्विताः ।
ते युद्धे घोषयाञ्चक्रुर्विजयोऽस्मान् वरिष्यति ॥३९॥

तेषां गर्वस्य नाशार्थं ब्रह्माऽऽयाद् यक्षरूपिणः ।
तत्समक्षे प्रादुरासीद् ब्रह्मयक्षस्वरूपकः ॥४०॥

ते देवा ज्ञातुमिच्छन्ति कोऽयं यक्ष इति क्रमे ।
इन्द्रः सम्प्रैषयद् वह्निं सोऽपि तत्राऽऽगमत् स्वयम् ॥४१॥

यक्षाग्रे प्रस्तुतोऽग्निश्च यक्षोऽप्यग्रसरोऽभवत् ।
उभौ स्वं नामकर्मादि प्रस्तुवन्तौ परस्परम् ॥४२॥

भस्मीकर्तुं तृणमदादग्नये किन्तु सोऽक्षमः ।
स्वकार्यार्थमशक्यत्वान्निवृत्तोऽग्निस्तु लज्जया ॥४३॥

पुनः सम्प्रैषयन् देवाः पवनं यक्षसन्निधिम् ।
यक्षोऽपृच्छच्च पवनं तन्नाम कर्म सुस्थिरः ॥४४॥

पवनायाऽददादेकमुद्गन्तुं तृणमुत्तमम् ।
निवृत्तः पवनोऽशक्तः शक्रं सम्प्रैषयन् सुराः ॥४५॥

गतो मेलयितुं शक्रो यक्षोऽन्तर्धानमागतः ।
उमाऽऽकाशमुदेति स्म शक्रः सन्निधिमागतः ॥४६॥

उमाऽवदत्– स यक्षस्तु ब्रह्मैवाऽस्ति सुराः समे ।
इन्द्रैतद् त्वं विजानीहि भवन्तो महिमाऽन्विताः ॥४७॥

बह्निरिन्द्रश्च पवनः प्राकुर्वन् ब्रह्मदर्शनम् ।
अत एव त्रयो देवाः प्राभवन् महिमान्विताः ॥४८॥

ततश्चौपनिषद्वाक्यात् श्रुतिरादिशति स्वयम् ।
बृहदारण्यको वक्ति 'ब्रह्मोपास्यं निरन्तरम्' ॥४९॥

वदत्युपनिषद् ब्राह्मी श्रुतिरेवं गरीयसी ।
तपः कर्मादिकं यस्मिन् सदा सत्ये प्रतिष्ठितम् ॥५०॥

श्रुतिरेषा निगदति सर्वं जानाति यः सदा ।
पापक्षीणो जनः पश्चादिन्द्रलोकं गमिष्यति ॥५१॥

शान्तिपाठः

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरण-मस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु । ते मयि सन्तु ॥

ॐ शान्तिः ! शान्तिः!! शान्तिः!!!

(इत्युपनिषत्कारिकायां केनोपनिषत्कारिका)

❀ ❀ ❀

ॐ तत्सद्ब्रह्मणे नमः ।

# कठोपनिषत्कारिका

यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वदृक् तथा ।
सर्वभावपदातीतं स्वात्मानं तं स्मराम्यहम् ॥

**शान्तिपाठः**

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु । मा विद्विषावहै ।
ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

शिष्यः –
क्वचित् पुरातने काले प्राकरोद् वैदिके युगे ।
वाजश्रवा विश्वजितं यज्ञं सविधिपूर्वकम् ॥१॥

श्रुतं कियन् मयाऽप्यस्ति भगवन् ! यज्ञकर्मणः ।
फलादिकं कर्म सर्वमाज्ञापयतु मामिह ॥२॥

गुरुः–
अस्त्वेवमृषिणा यज्ञे कृतं दानादिकं च यत् ।
वर्षीयस्यो धेनवश्चाऽगमन् दानादिकर्मसु ॥३॥

तत्पुत्रो नचिकेताऽऽसीदबोधः पञ्चहायनः ।
अभूत् तच्चित्तविकलं स्वपितुर्दानकर्मणि ॥४॥

नचिकेता –
तात ! यज्ञे विश्वजिति देयं वित्तं सधेनुकम् ।
यस्मै कस्मै चिदपि मां विश्राणयतु भो भवान् ! ॥५॥

गुरुः –

तत्पिताऽतीव सङ्क्रुध्य प्रदेयोऽसीह मृत्यवे ।
वाक्यं श्रुत्वैव पुत्रोऽपि प्राधावन् मृत्युसन्निधिम् ॥६॥

यमलोकमगात् पुत्रो न दृष्टस्तद्घरे यमः ।
बुभुक्षितोऽपि तत्रैव वसतिं कृतवान् सुतः ॥७॥

निवसन्नतिथिर्भूत्वा नचिकेता दिनत्रयम् ।
विनिवृत्तः समायातो यमराजः स्वयं घरे ॥८॥

घरे समागतायाऽद्य विप्रायाऽतिथये सदा ।
अग्निरूपाय देवाय त्वर्घपात्रं समर्प्यते ॥९॥

एवं बुद्ध्वा यमस्तस्याऽतिथेः पूजादिकं व्यधात् ।
दिनत्रयबुभुक्षार्थं पश्चात्तापोऽपि संव्यधात् ॥११॥

यत्कष्टमभवद् ब्रह्मन् ! दिनत्रयबुभुक्षिते ।
तदर्थं भवते दद्मि प्रार्थय त्वं वरत्रयम् ॥१२॥

नचिकेता किमयाचत् किं वरं दत्तवान् यमः ।
तयोर्यद् ब्रह्मसंवादस्ताभ्यां श्रूयास्म सत्वरम् ॥१३॥

## यमनचिकेतासंवादः

यमराजः –

अवसन्मे घरे ब्रह्मन् ! दिनत्रयबुभुक्षितः ।
वरत्रयं सौम्य ! लेयं प्रीत्या ते प्रददाम्यहम् ॥१४॥

नचिकेता –

'प्रसीदतु पिता मेऽद्य मदर्थं प्रथमो वरः ।
शान्तः प्रसन्नो निष्क्रोधो भूयात् स जनको मयि' ॥१५॥

यमराजः –

नचिकेत ! पिता भूयात् पूर्ववत् ते यथा तथा ।
सस्नेहोऽपि च सानन्दः सुप्यादुद्दालकस्तव ॥१६॥

नचिकेता –

द्वितीयो मे वरः स्वर्ग्यं कुरुतामग्निवर्णनम् ।
भवन्तु येन स्वर्गीया जीवा अमृतबान्धवाः ॥१७॥

यमराजः –

उपदिशामि हे सौम्य ! स्वर्गीयाऽग्निमपीह ते ।
मुक्तिवैभवरूपोऽग्निः स वस्ता बुद्धिगह्वरे ॥१८॥

गुरुः –

यमो विनिर्दिशच्चाग्निं फलं तच्चयनस्य च ।
संक्षेपेण मयोक्तं तत् पठ त्वं प्राप्यते फलम् ॥१९॥

नचिकेताऽग्रेसरोऽभूत् तृतीयवरयाचने ।
किमयाचत् ? किमददात् ? संवादं शृणुमस्तयोः ॥२०॥

नचिकेता –

एतत् पृच्छामि भगव ! मृत्युपश्चाज्जनः कुतः ।
गच्छत्यहो ! तदस्तित्वं भवेद् वा न ? वरं परम् ॥२१॥

यमराजः –

देवा अपि न विन्दन्ति ज्ञातुमेतत् सुदुष्करम् ।
अत एव परं ब्रह्मन् ! वरं याचस्व ते प्रियम् ॥२२॥

नचिकेता –

दुर्ज्ञेयमस्तु हे देव ! न याचेऽहं वरं परम् ।
भगवन्तं विना नाऽन्यो ज्ञाताऽस्तीति विचिन्तये ॥२३॥

यमराजः –

सम्पदो बहु प्राप्नुयाः सुतास्ते चिरजीविनः ।
भूमण्डलं भवतु ते दीर्घायुश्च भवान् भवेत् ॥२४॥

इत्थमन्यद् वरं याच त्वदर्थं चिरभाविनम् ।
वाञ्छानुकूलं याचस्व वरं त्वं नचिकेत ! हे ! २५

याचस्वाऽन्यद् विना मृत्युं रामां यानं रथादिकम् ।
यद् याचसे ददाम्येव वाञ्छया ते वरं परम् ॥२६॥

नाचिकेता –

यत् तत् सर्वं वस्तुजातं मिथ्या सन्त्येव तैर्मम ।
देहेन्द्रियादिकं सर्वं जराजर्जरयन्ति माम् ॥२७॥

जीवितव्यमस्ति लघु युष्मद्वाहनसम्पदः ।
त्वया सहैव तिष्ठन्तु किञ्चिद् गृह्णामि नैव ते ॥२८॥

मनुष्योऽयं धनैस्तृप्तः कदापि भवतीह नो ।
धनं प्राप्तुं तु शक्ष्यामि त्वत्तो दास्यसि मे भवान् ॥२९॥

तृतीयं मे वरं देहि यत् पूर्वोक्तं मया हि तत् ।
सुखं नेच्छामि स्वर्गीयं तन्मन्ये तुच्छवस्तुवत् ॥३०॥

मृता जना भवन्तीह न वा ? मृत्यो ! वदेह माम् ।
साम्परायाः क्व गच्छन्ति ? तदुत्तरय मां भवान् ॥३१॥

गुरुः –

नचिकेतुः परीक्षायाः सतुष्टोऽद्य यमोऽपि हि ।
ब्रह्मविद्यामुपदिशद् हृष्टस्तत्क्षणमेव तम् ॥३२॥

नचिकेता किं किमैच्छत् ? किमुत्तरमदाद् यमः ।
वयं पठामः सारांशे संवादमुभयोरिह ॥३३॥

नचिकेता –
तन्मे ददातु हे मृत्यो ! यन्मया याचितं वरम् ।
यन्मिथ्या मायिकं वस्तु नश्वरं तन्न कामये ॥३४॥

यमराजः –
श्रेयःप्रेयमुभौ वस्तु बध्नाति पुरुषं परम् ।
श्रेयोद्वारा भवेन्मुक्तः प्रेयो बन्धयति ध्रुवम् ॥३५॥

श्रेयःप्रेयमुभौ वस्तु प्राप्तुं शक्नोति मानवः ।
विविच्य विद्वानुभयोः श्रेयं वस्तु समाप्नुयात् ॥३६॥

पुत्रवित्तादयः सन्ति प्रिया भोग्याऽप्सरोजनः ।
अज्ञास्त्वेतेषु मज्जन्ति मिथ्याज्ञानेऽप्यबुद्धयः ॥३७॥

नचिकेतो ! भवानद्य सर्वानेतान् पराकरोत् ।
तवाऽयं श्रेयसो मार्गो भवेदत्यन्तसुन्दरः ॥३८॥

अविद्या तम एवाऽस्ति विद्या ब्रह्म प्रकाशकम् ।
भवान् विद्याऽभिलाषोऽसि त्यक्त्वा भोगान् विलासितान् ॥३९॥

पण्डितम्मन्यमानास्ते अविद्योपहता जनाः ।
अन्धेन नीयमाना ये बहुकालं भ्रमन्त्यहो ! ॥४०॥

अन्धैस्तैर्धनलोभेन न दृष्टं मोक्षसाधनम् ।
परलोकं न मन्यन्ते मर्त्येऽस्मिन् चङ्क्रमन्त्यहो ! ॥४१॥

बहवो नैव शृण्वन्ति श्रुत्वा बुध्यन्ति नैव ते ।
वक्ता न लभ्यते चाऽस्य साऽऽश्चर्यं यदि लभ्यते ॥४२॥

बोद्धा मुमुक्षुणा सार्धं ज्ञाताऽऽचार्योऽपि लभ्यते ।
उभावेतौ हि साऽऽश्चर्यौ ताभ्यां मुक्तिस्तथाविधा ॥४३॥

मिथ्या वाच्यं मायिकं स्यादाऽऽत्माऽवाच्यो हि सर्वदा ।
सामान्यबुद्ध्या गदितुं नैव शक्नोति वस्तु तत् ॥४४॥

भेददर्शी य आचार्यः सूक्ष्माऽऽत्मानं परात्परम् ।
गदितुं नैव जानाति ह्यात्मज्ञानं सुदुस्तरम् ॥४५॥

नचिकेता –

आत्मज्ञानं दुस्तरं चेन्मृत्यो ! वदतु साम्प्रतम् ।
मुमुक्षवः कथं दुःखान्मुच्यन्ते मर्त्यलोकतः ॥४६॥

यमराजः –

अयमात्मा सौम्य ! तर्कैर्ज्ञातुमत्यन्तदुष्करः ।
आत्मा समुपदेश्योऽस्ति श्रोत्रियब्रह्मविद्गुरोः ॥४७॥

नचिकेतो ! मदग्रे त्वमसाधारणबुद्धिमान् ।
त्वादृशः प्रश्नकर्ता तु मन्येऽन्यो नैव दृश्यते ॥४८॥

कर्मणोऽस्ति फलं मिथ्या मन्येऽहं सौम्य ! विद्धि तत् ।
अनित्यहेतुद्वारेण जाने नित्यं मिलत्यहो ! ॥४९॥

साधनं चैव मिथ्याऽस्ति साध्यार्थं तत्तु साधनम् ।
तदग्निचयनद्वाराऽमिलन्मां याम्यमासनम् ॥५०॥

यज्ञानां फलमत्यर्थं सौम्य ! हे ! बुद्धिपूर्वकम् ।
इहामुत्रार्थभोगः स्यात् त्वया त्यक्तं सुनिश्चलम् ॥५१॥

बुद्धेरन्तः सदाऽऽत्माऽस्ति तज्ज्ञानमतिदुस्तरम् ।
अध्यात्मविद्यया ज्ञातो धीरो याति कियान् परः ॥५२॥

सत्यं त्वं नचिकेतोऽसि मुमुक्षुरिति वेद्म्यहम् ।
मोक्षद्वारं त्वदर्थं स्यादित उद्घाटितं भवेत् ॥५३॥

नचिकेता –
यो धर्मात् पृथगस्त्यत्र सोऽधर्माच्च परो भवेत् ।
कार्यकारणरूपाच्च प्रपञ्चादपि यः परः ॥५४॥

भविष्यतोऽपि भूताच्च यदन्यं स्वात्मवैभवम् ।
यदि ज्ञाताऽसि हे मृत्यो ! ज्ञपयस्व तदद्य माम् ॥५५॥

यमराजः –
सर्वे वेदा यत्पदं वर्णयन्ति
तपश्च सर्वाण्यपि साधनानि ।
मुमुक्षुभिर्ब्रह्मचर्यव्रतैश्च
अन्विष्यते तत्पदं वर्णयामि ॥ (५६–५७)

तदक्षरं ब्रह्म वेद्यं जानीहि ब्रह्म तत्परम् ।
ज्ञात्वा तदक्षरं ब्रह्म नरा यान्ति परात्परम् ॥५८॥

आलम्बनेन यस्यैव श्रेय आलम्बते जनः ।
आलम्बनेन यस्यैव नरो ब्रह्म समश्नुते ॥५९॥

नचिकेता –
आत्मस्वरूप ! हे देव ! तन्मां निगदतु भृशम् ।
कथं मया ज्ञायते तज्ज्ञातुमिच्छामि साम्प्रतम् ॥६०॥

यमराजः –
न जायते म्रियते वा सोऽन्यस्मात् कारणादपि ।
नाऽयमभून्न भविता नित्य आत्माऽस्ति शाश्वतः ॥६१॥

अजो नित्य एष आत्मा पुराणो
गते देहे नैव गन्ताऽस्ति चाऽऽत्मा ।
न जायते म्रियते वैष चाऽऽत्मा
न हन्यते हन्यमानेऽपि देहे ॥६२॥

आत्मानं मारयामीति मन्यते वक्ति वा कुधीः ।
उभौ द्वावेव चाऽज्ञौ स्तो हन्यते म्रियते न सः ॥६३॥

अणोरणीयानाऽऽत्माऽस्ति महतोऽपि महानयम् ।
आत्मास्ति सर्वजन्तूनां बुद्धिगह्वरसंस्थितः ॥६४॥

ज्ञानी पुरुष एवेममात्मानं प्राप्नुयात् स्वतः ।
अहं ब्रह्माऽस्मीति बुद्ध्वा तरति शोकसागरम् ॥६५॥

स्थिरो भूत्वा वसत्याऽऽत्मा ह्यस्थिरश्चञ्चलं मनः ।
दूरं याति मनो देहे स्थित्वा बुद्ध्या स गम्यते ॥६६॥

अशरीरी शरीरेऽस्मिन्ननित्ये नित्यरूपकः ।
आत्मा वितिष्ठति विभुर्ज्ञात्वा शोकं तरेन्नरः ॥६७॥

न वेदाऽध्ययनादात्मा प्राप्यते पुस्तकग्रहात् ।
न मेधया वा श्रवणादाऽऽत्माऽवाप्येत वस्तुतः ॥६८॥

यश्चिन्तनपरो नित्यं मुमुक्षुस्तत्त्वमात्मनः ।
आत्मा साक्षाद् भवत्येव तं मुमुक्षुं प्रति स्वतः ॥६९॥

पापे लिप्तोऽस्ति यो नित्यमिन्द्रियाणां वशेऽस्थिरः ।
विक्षिप्तं च मनो यस्य ह्यात्मज्ञानमसंभवम् ॥७०॥

आत्मनो ब्रह्म च क्षत्रमुभे भवत ओदनम् ।
दुर्ज्ञेयं तत्त्वमात्माऽस्ति को जानीयात् ? सुधीः पुमान् ॥७१॥

आत्मानं रथिनं विद्धि शरीरं तु रथं पुनः ।
बुद्धिं ते सारथिं विद्धि मनः प्रग्रहमेव तत् ।।७२।।

इन्द्रियाणि हयान् विद्धि मार्गास्ते विषया अपि ।
मनसेन्द्रियसंयुक्त आत्मा भोक्ताऽभवत् तव ।।७३।।

विवेकयुक्तां सद्बुद्धिं धृत्वा यः प्राग्रहीन्मनः ।
संसारमार्गमुल्लँघ्य स याति परमं पदम् ।।७४।।

इन्द्रियेभ्यः पराः सूक्ष्मा विषयाः सन्ति तत्पराः ।
विषयेभ्यः परं चैकमुत्कृष्टं चञ्चलं मनः ।।७५।।

मनसोऽस्ति परा बुद्धिर्बुद्धेरात्मा महान् परः ।
महतः परमुत्कृष्टमव्यक्तं पुरुषस्ततः ।।७६।।

अव्यक्तादपि चोत्कृष्ट आत्मा पुरुषवाचकः ।
पुरुषान्न परं किञ्चित् क्वचित् कश्चन विद्यते ।।७७।।

नचिकेता –

कथं ग्राह्यो भवेदात्मा बुद्धेरपि महान् परः ।
मन्येऽग्राह्यः स आत्माऽस्ति, ज्ञातुमस्ति स दुष्करः ।।७८।।

यमराजः –

सर्वभूतेषु व्याप्तोऽयमात्मा नैव प्रकाशते ।
आत्मानं सूक्ष्मबुद्ध्या तु ज्ञायन्ते सूक्ष्मदर्शिनः ।।७९।।

नचिकेता –

ज्ञायते स कथं मृत्यो ! मामुपायं ब्रवीतु भो !

यमराजः –

उपायं सूक्ष्मरूपेण निगदामि शृणुष्व तम् ।।८०।।

ज्ञानिनो वाक्चरुं सौम्य ! मानसाऽग्नौ प्रजुह्वति ।
तन्मानसचरुं भूयो जुह्वति बुद्धिदीपिते ॥८१॥

साधवो बुद्धितत्त्वं तु महत्तत्त्वसमिन्धने ।
जुह्वति तन्महत्तत्त्वं शान्त आत्मनि जुह्वति ॥८२॥

तदर्थं सौम्य ! उत्तिष्ठ जहि निद्रां प्रमादजाम् ।
उपसत्तिं प्रकुरुष्व ब्रह्मज्ञं गुरुसन्निधिम् ॥८३॥

ब्रह्मज्ञो गुरुरेव त्वां ज्ञानं चोपदिशेदिह ।
क्षुरधारेव निशितो ज्ञानमार्गोऽतिदुस्तरः ॥८४॥

गुरुः –
यमराजसमुद्दिष्टामाख्यानं नचिकेतसः ।
वक्ता श्रोताऽपि जगति मुच्यते भवबन्धनात् ॥८५॥

य इदं ज्ञान माख्याति प्रगत्वा ब्रह्मसंसदम् ।
किं वा श्राद्धेऽपि सुपठेत् स याति परमं पदम् ॥८६॥

शिष्यः –
न कथं ज्ञायते चाऽऽत्मा सर्वभूताऽधिवासकः ।
कथं निवार्यते किं स्यात् तदस्य प्रतिबन्धनम् ॥८७॥

गुरुः –
प्रतिबन्धकबोधेन शक्यते तन्निवारणम् ।
शृणुष्व प्रयतिष्येऽहं मन्येऽहं तन्निवार्यते ॥८८॥

स्वयम्भूः परमात्मा च दशेन्द्रियप्रसर्जकः ।
प्रकुप्य तत्क्षणे भङ्क्त्वा बहिर्मुखमकुर्वत ॥८९॥

बहिरेव प्रपश्यन्ति चैतस्मात् कारणान्नराः ।
अन्तःस्थमपि द्रष्टारं न दृष्ट्वा बहिरुद्गताः ॥९०॥

स्वानीन्द्रियाणि संयम्य मुमुक्षुश्चेज्जनः स्वकम् ।
अन्तर्दृष्ट्वा ध्यायति चेदात्मानं द्रष्टुमर्हति ॥९१॥

भूत्वा स्वान्तर्मुखो धीरो यो ज्ञानं कर्तुमिच्छति ।
पश्यति प्रत्यगात्मानं तरति भवसागरात् ॥९२॥

दृश्यं दृष्ट्वा रमन्ते ते स्वल्पज्ञा मूढमानवाः ।
मृत्युपाशं गता दुःखं प्राप्नुवन्ति तरन्ति नो ॥९३॥

आत्मज्ञास्तु नरा मिथ्यादृश्यं पश्यन्ति न क्वचित् ।
ज्ञात्वा ब्रह्माऽऽत्मविज्ञानं संसारात् प्रतरन्ति ते ॥९४॥

आत्मज्ञानादेव नरो जाग्रत्स्वप्नान् प्रविन्दते ।
आत्मज्ञानादेव ज्ञानी तरति शोकसागरम् ॥९५॥

भोक्तारः प्राणिनोऽपीह भूतभव्यादिशासकाः ।
आत्मज्ञानेन विद्वांसो भवन्ति नाऽऽत्मरक्षकाः ॥९६॥

ब्रह्मादीनपि यो वेत्ति यस्मिन् सर्वे प्रतिष्ठिताः ।
स एव ब्रह्मणो ज्ञानं कर्तुं शक्नोति निश्चितम् ॥९७॥

य आत्मा तिष्ठति देहे देहबाह्येऽपि सर्वतः ।
इत्थं जानाति यो विद्वान् बाह्ये नाना न पश्यति ॥९८॥

सनातनं ब्रह्म सच्चिन्मनसः प्राप्तुमर्हति ।
नास्ति ब्रह्मणि नानात्वं नाना पश्यति मन्दधीः ॥९९॥

**'शरीरान्तर्निवसति ह्यात्माऽङ्गुष्ठप्रमाणकः ।'**
**इत्थं जानाति यो धीरः स आत्मज्ञो भवेज्जनः ॥१००॥**

निर्धूमज्योतितुल्योऽस्ति ह्यात्माऽङ्गुष्ठप्रमाणकः ।
शास्ता त्रिकालाऽतीतोऽस्ति साऽऽनन्दं ब्रह्म निर्भरम् ॥१०१॥

नचिकेता –
एतद् दुरूहं बोधार्थं मृत्यो ! दिशतु मे पुनः ।
आज्ञापयतु मामात्मस्वरूपं कृपया पुनः ॥१०२॥

यमराजः –
बुद्ध्वा चैकादशद्वारं शरीरपुरमात्मनः ।
सद्यो मुक्तो भवेद्देही भवेद् ब्रह्म परात्परम् ॥१०३॥

सूर्ये चन्द्रे वसौ वायौ पञ्चभूतादिसर्वसु ।
व्यापकोऽस्ति महानाऽऽत्मा व्याप्तेः सर्वत्र सर्वगः ॥१०४॥

नचिकेता –
कथं भवति कैर्लिङ्गैः स्वरूपज्ञानमात्मनः ।
ज्ञानार्थं शक्यते मृत्यो ! युक्त्या मां प्रब्रवीतु भो ! ॥१०५॥

यः प्राणमूर्ध्वं नयति सोऽपानं प्रत्यगस्यति ।
वसन् हृदयमध्ये य आत्मोपास्योऽस्ति निर्मलः ॥१०६॥

आत्मा देही स देहस्थो देहाद् विस्रंसिते सति ।
देहो भवति निःशेषः स आत्मा परिशिष्यते ॥१०७॥

न प्राणेन नाऽपानेन मर्त्यः क्वापि न जीवति ।
आत्मतत्त्वं विनाऽन्येन मर्त्यो नैवेह जीवति ॥१०८॥

नचिकेता –
जिज्ञासाऽस्तीह मे ब्रह्मन् ! मामुत्तरय साम्प्रतम् ।
गतिरज्ञानिजीवानां किं भवेन्मरणोत्तरम् ॥१०९॥

यमराजः –

स्वकर्मज्ञानमापन्नो जीवाऽऽत्मा मरणोत्तरम् ।
प्रपद्यते योनिमन्यां जायते स्थावरेष्वपि ॥११०॥

पूर्वं मया प्रतिज्ञातं साम्प्रतं श्रावयामि तत् ।
नचिकेतस्त्वामधुना गुह्यं ब्रह्म सनातनम् ॥१११॥

यदा स्वपन्तीन्द्रियाणि जागर्त्याऽऽत्मा विशेषतः ।
इच्छया वस्तुसाराणि स सर्जयति सन्ततम् ॥११२॥

सैवाऽस्ति शुद्धं सद्ब्रह्म सैव ब्रह्माऽमृतं परम् ।
तत् सर्वेषामनुल्लङ्घ्यं सर्वाऽऽधारमिदं समम् ॥११३॥

नचिकेता –

आत्माऽज्ञेयोऽस्ति दुर्बोध्यो ह्यवाङ्मनसगोचरः ।
स कथं शक्यते ज्ञातुं तदुपायं ब्रवीतु मे ॥११४॥

यमराजः –

आत्मा बाह्येन्द्रियद्वारा ज्ञातुं दुष्कर एव हि ।
रज्जुसर्पादिभिर्मिथ्योपाधिभिर्ज्ञायते हि सः ॥११५॥

यथाऽग्निर्व्यापकोऽदृष्टो लोहपिण्डेन्धनादिषु ।
रूपवद्वस्तुषु यथा तद्रूपोऽग्निः प्रकाशते ॥११६॥

यथा सम्पूर्णभूतेषु तथाऽन्तश्चिद् विराजते ।
तद्रूपेण वसत्याऽऽत्मा बहिरन्तश्चिदेव हि ॥११७॥

यथैव सर्वलोकानां संस्थितं नयनद्वयम् ।
तथापि बाह्यदोषेण भास्करोऽपि न दृश्यते ॥११८॥

तथैव सर्वभूतेषु संस्थितेऽप्यन्तरात्मनि ।
संसारदुःखलिप्तत्वादन्तर्बाह्यं करोति न ॥११९॥

**अनित्येषु शरीरेषु नित्यश्चिन् नित्यचेतनः ।**
**सर्वेषां कामनामात्मा कुरुते नित्यपूरणम् ॥१२०॥**

येन स्वबुद्धौ चित् संवित् प्रतिपद् दृश्यते भृशम् ।
तेनैव शाश्वती शान्तिरवश्यं प्राप्यतेऽनिशम् ॥१२१॥

नचिकेता –
विवेकिनो गदन्त्येतदात्मज्ञानं तु दुष्करम् ।
स कथं बुद्ध्यते सम्यक् स्वबुद्धौ भासते न वा ? ॥१२२॥

यमराजः –
न ते ब्रह्मणि भासन्ते सूर्यचन्द्राग्निविद्युतः ।
सहस्रसूर्यतुल्यस्तत् तारकाणां तु का कथा ? ॥१२३॥

सहस्रसूर्यो युगपत् स्वयं ब्रह्म प्रकाशते ।
गृहीत्वा ब्रह्मणो भासमन्ये सर्वे चकाशते ॥१२४॥

तूलद्वारा यथा लोके ज्ञातव्यं मूलमुच्यते ।
तथा संसारवृक्षेण बोद्धव्यं ब्रह्म विद्यते ॥१२५॥

अश्वत्थ वृक्षवद् ब्रह्म मूलमूर्ध्वं वितिष्ठते ।
ब्रह्मणा तदुपादानात् सर्वं सृष्टं सनातनम् ॥१२६॥

स्वयं प्रकाशते ब्रह्म ज्योतीरूपं परात्परम् ।
अमृतब्रह्मणि सर्वं तच्चराचरमाश्रितम् ॥१२७॥

संसारः सर्वदृश्योऽयममृतब्रह्मणि स्थितः ।
य इमं ज्ञायते सम्यक् सोऽमृतत्वाय कल्पते ॥१२८॥

भयरूपं महद् ब्रह्म वज्रतुल्यं समुत्थितम् ।
यो जानाति महद् ब्रह्म सोऽमृतत्वाय कल्पते ॥१२९॥

अग्निसूर्यौ प्रतपतः संसारं ब्रह्मणो भयात् ।
तद् भयाद् वाति वायुश्च मृत्युश्चरति तद्भयात् ॥१३०॥

स्वर्लोकमवतीन्द्रोऽपि भयाद् ब्रह्मण एव हि ।
यो जानाति महद् ब्रह्म सोऽमृतत्वाय कल्पते ॥१३१॥

यो जीवन् जीवनं ब्रह्मज्ञानं कुर्यादतन्द्रितः ।
स जीवन् जीवने मुक्तो जायते म्रियतेऽन्यथा ॥१३२॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतो महान् ॥१३३॥

अव्यक्तस्तत्परश्चात्मा ततोऽपि पुरुषः परः ।
तमेवं पुरुषं ज्ञात्वा जीवनाऽब्धेस्तरेन्नरः ॥१३४॥

दृश्यते नाऽऽत्मनो रूपं कथञ्चिच्चर्मचक्षुषा ।
एकाग्रमनसा ध्यानात् स बुद्धौ भासते महान् ॥१३५॥

इत्थं यः कुरुते सम्यग् बुद्ध्या ब्रह्मात्मदर्शनम् ।
ब्रह्माऽहमिति बोधेन सोऽमृतत्वाय कल्पते ॥१३६॥

पञ्चज्ञानेन्द्रियैः सार्धं मनश्च प्रविलीयते ।
आत्मन्येव यदा बुद्धिर्भृशं भवति निष्क्रिया ॥१३७॥

साधनान्ते यदा बुद्धिरित्थं भवति निष्क्रिया ।
श्रुतिरेवं निगदति[१] – 'सैषा हि परमा गतिः' ॥१३८॥

---

१. यदा पञ्चावतिष्ठन्ते ..... (कठ २।३।१०)

य इत्थं कुरुते नित्यं स्थिरामिन्द्रियधारणाम् ।
तां योगमिति मन्यन्ते ह्यप्रमत्तो भवेत्तदा ॥१३९॥

नचिकेता–
बुद्धिर्ज्ञातुं न शक्नोति विना ज्ञानेन्द्रियैः सह ।
बुद्धीन्द्रियैर्विरहितः कथं स्याद् ब्रह्मचिन्तनम् ॥१४०॥

न वाण्या मनसा किं वा ह्यात्माऽसौ चक्षुषा विना ।
न ज्ञायते कथं भूयात् ? साक्षादस्तीति वाचनात् ॥१४१॥

यमराजः –
मनुष्यमनसः कामा यदा शाम्या भवन्त्यहो !
स तस्मिन् समये ज्ञानी ब्रह्म वाऽमृतमश्नुते ॥१४२॥

नचिकेता –
मनसो ग्रन्थयः सर्वे कदा नश्यन्ति पूर्णतः ।
ब्रह्माऽमर्त्या भवेयुस्ते कथं मर्त्या जना इह ॥१४३॥

यमराजः –
यदा शान्ता भवन्त्येते मनसो ग्रन्थयः समे ।
'ब्रह्मविद् ब्रह्म भवति' सर्वे वेदा गदन्त्यपि ॥१४४॥

नचिकेता –
अग्निविद्या श्रुता पूर्वं मन्ये सा गौरवाऽऽस्पदा ।
तत्फलं श्रोतुमिच्छामि ब्रह्मन् ! वदतु साम्प्रतम् ॥१४५॥

यमराजः –
शतं चैका हृदन्तःस्था नाड्य एकोद्ध्वर्वमागताः ।
मूर्द्धानमभिनिःसृत्य सुषुम्णाऽऽमृतमश्नुते ॥१४६॥

यस्य मूर्ध्नोद्गताः प्राणा आत्मज्ञोऽमृतमश्नुते ।
शेषा नाड्यस्तस्य प्राणोत्क्रमे भवन्ति द्वाराणि ॥१४७॥

अङ्गुष्ठमात्र आत्माऽस्ति स्वान्ते नित्यं प्रतिष्ठते ।
पुरुषो ह्यन्तरात्माऽस्ति ज्ञातव्यो ज्ञानिभिः सदा ॥१४८॥

मुञ्जस्येषिकया तुल्या नाडी धैर्येण दृश्यते ।
शरीरभिन्ना द्रष्टव्या सुषुम्णा सा हि सुस्थिरा ॥१४९॥

सैषाऽमृता शुद्धनाडी चैतद् ब्रह्म सनातनम् ।
ज्ञानी तद्ब्रह्म ज्ञात्वैव ब्रह्म भूयाय कल्पते ॥१५०॥

श्रुतिः –
यमराजोऽमृतां विद्यां यथैव नचिकेतसम् ।
इमामुपादिशत् सोऽपि यातो ब्रह्माऽमृतोऽभवत् ॥१५१॥

अन्ये जिज्ञासवोऽपीमां विद्यां ज्ञात्वा सनातनीम् ।
ब्रह्मभूयाय कल्पन्ते फलं श्रुतिरुपादिशत् ॥१५२॥

शान्तिपाठः

ॐ सह नाववतु । सह नौ भुनक्तु । सहवीर्यं करवावहै ।
तेजस्विनावधीतमस्तु । मा विद्विषावहै ।
ॐ शान्तिः ! शान्तिः ! शान्तिः ।

॥ इति कठोपनिषत्कारिका ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# प्रश्नोपनिषत्कारिका

इतः पूर्णं ततः पूर्णं पूर्णात् पूर्णं परात्परम् ।
पूर्णानन्दं प्रपद्येऽहं सद्गुरुं शङ्करं स्वयम् ॥

शान्तिपाठः

ॐ भद्रं कर्णेभिः शृणुयाम देवा ! भद्रं पश्येमाऽक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनभिर् व्यशेमहि देवहितं यदायुः ॥१॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥२॥

ॐ शान्तिः ! ॐ शान्तिः ! ॐ शान्तिः ।

शिष्यः –
अस्मिन् प्रश्नोपनिषदि प्रश्नाः कतिविधाः खलु ।
क आसन् प्रश्नकर्तारः क उत्तरमदुः किमु ? ॥१॥

गुरुः –
सुकेशासत्यकामाद्या आसन् जिज्ञासवोर्षयः ।
ब्रह्मज्ञपिप्पलादस्य सद्गुरोः सन्निधिं गताः ॥२॥

आचार्यकुलवास्तव्याः शिष्या नियमसंयुताः ।
गुरुं सन्तोषयन्तस्ते तं प्रश्नं समुदीरयन् ॥३॥

के के जनाश्च के प्रश्नाः कृतवन्तः किमुत्तरम् ?
श्रोतव्यमिह तैः प्राप्तं तेभ्यः साम्प्रतमुत्तरम् ॥४॥

कात्यायनः कबन्धी –
भगवन् ! कः करोतीमाः प्रजाः सर्वा ब्रवीतु भो ! ?

पिप्पलादः –
प्रजापती रयिप्राणावसृजत् प्रथमं शृणु ।।५।।

प्राण आदित्यरूपोऽस्ति शक्तिश्चन्द्रौ रयिः स्मृतः ।
अमूर्तः प्राणसंप्राप्ती रयिमूर्तौ प्रतिष्ठितः ।।६।।

उदेति पूर्वं यः सूर्यो रश्मीन् किरति सर्वतः ।
सूर्यो रश्मिषु प्राणाँस्तान् सुस्थापयति सर्वतः ।।७।।

गुरुः –
अस्य व्याख्याऽतिदीर्घाऽस्ति सौम्य ! त्वं पठ काठके ।
श्रुतौ समग्रं संबुद्ध्वा शनैरुन्नतिमाश्रय ।।८।।

प्रश्नः कृतो भार्गवेण द्वितीयो गुरुसन्निधिम्
आधारभूतदेवानां विषये क्रमशः पुनः ।।९।।

तत् सर्वं मूलतो ज्ञेयं पठेच्चेज्ज्ञानमाप्यते ।
मार्गनिर्देशकोऽहं तु पथिको गन्तुमर्हति ।।१०।।

कौसल्येन कृतः प्रश्नस्तृतीयो गुरुसन्निधिम् ।
प्राणोत्पत्त्यादिविषये पिप्पलादः समुत्तरत् ।।११।।

अभ्यासं कुरु हे सौम्य ! तानि प्रश्नोत्तराणि च ।
गुरोः संकेतमात्रेण पठनीयं स्वयं पुनः ।।१२।।

गार्ग्येणाऽपि कृतः प्रश्नश्चतुर्थो गुरुसन्निधिम् ।
सुषुप्तौ स्वप्नविषये ज्ञाता कोऽनुभवश्च कः ? ।।१३।।

पिप्पलादः –

परमात्मा न स्पृशते न जिघ्रति शृणोति न।
नाऽऽदत्ते नाऽभिवदति नैवाऽऽनन्दयते क्वचित् ॥१४॥

नेयायते रसयते न करोति विसर्जनम्।
नैव किञ्चित् पश्यति तं, स्वपितीति वदन्त्यहो ! ॥१४॥

सुषुप्तिकाले प्राणाग्निस्तस्य जागर्ति केवलम्।
अन्येऽपानादयः सर्वे गार्हपत्यादयः स्मृता ॥१५॥

अग्निहोत्रादिकं कर्म होतारं चापि वर्णितम्।
मनो जीवात्मरूपोऽयं सर्वं पश्यति सर्वदृक् ॥१६॥

गार्ग्यः –

बुद्धेरवस्थास्तिस्रस्ता जाग्रत्स्वप्नसुषुप्तयः।
सुषुप्तेः श्रोतुमिच्छामि जीवबुद्ध्यात्मिकां दशाम् ॥१७॥

पिप्पलादः –

यदा तमसि लीनः स्यान्मनः स्वप्नं न पश्यति।
परन्तु तस्यां वेलायां मन आनन्दमश्नुते ॥१८॥

सुषुप्तेरस्ति सा वेला शरीराऽवयवाः समे।
जीवात्मनि प्रलीयन्ते तदाकारा भवन्ति ते ॥१९॥

द्रष्टा स्प्रष्टा च श्रोता च घ्राता गन्ता क्रियात्मकः।
जीवाऽत्मैवाऽस्ति मुख्योऽयं विज्ञानाऽऽत्मा स एव हि ॥२०॥

अशरीरी स्वयं शुभ्रो यो जानाति सदक्षरम्।
सर्वज्ञः सर्वरूपी स भवत्येवाऽजराऽमरः ॥२१॥

गुरुः –
करोति पञ्चमं प्रश्नं सत्यकामो विनीतवाक् ।

सत्यकामः –
ओङ्कारोपासको ब्रह्मन् ? कं लोकं जयतीत्यतः ? ॥२२॥

पिप्पलादः –
ओंङ्कारोपासको वत्स ! परे ब्रह्मणि वाऽपरे ।
गत्वा मिलति सम्यक् स ओङ्काराश्रयमाचरन् ॥२३॥

एकमात्राविशिष्टं तमोङ्कारं यो हि ध्यायति ।
तपसा ब्रह्मचर्येण महिमानमवाप्नुयात् ॥२४॥

द्विमात्रयाविशिष्टं तमोङ्कारं यो हि ध्यायति ।
सोमलोकं समागम्य पृथिवीं पुनराप्नुयात् ॥२५॥

त्रिमात्रया विशिष्टं तमोंकारं यो हि ध्यायति ।
आत्मनो हृदयस्थस्य साक्षात्कारं करोति सः ॥२६॥

गुरुः –
सुकेशा नाम शिष्योऽपि षष्ठं प्रश्नं पिपृच्छति ।

सुकेशाः –
पुरुषं षोडशकलं गुरो ! वदतु मामिमम् ॥२७॥

पिप्पलादः –
हे सौम्य ! यस्य देहे ता उत्पन्नाः षोडश कलाः ।
सन्ततं तस्य देहस्य  ह्यन्तरात्मा वितिष्ठते ॥२८॥

कलाभिश्च षोडशभिः सम्पन्नं पुरुषं स्तुवन् ।
चैतन्यमेतं पुरुषं श्रुतिर्ध्यायति नित्यशः ॥२९॥

आत्मा सम्यग् विचार्यैवं क उत्क्रान्ते ममोद्गमः ।
यस्मिंस्तिष्ठति वत्स्यामि गते यस्मिन् प्रयाम्यहो ! ॥३०॥

स आत्मा प्रथमं प्राणमसृजत् तदनन्तरम् ।
पुनः श्रद्धां तथाऽऽकाशं रचनामकरोत् स्वयम् ॥३१॥

वायुं ज्योतिश्च सलिलं पृथिवीं चेन्द्रियाण्यपि ।
सहैव मनसाऽन्नानि वीर्यञ्चाऽप्यसृजत् प्रभुः ॥३२॥

तपो मन्त्रेण सार्धं तत् कर्म लोकादिनाम च ।
पुरुषोऽसर्जयत् सृष्टिं विवर्तं स्वात्मवैभवम् ॥३३॥

यथा नदीनां दृष्टान्तं जगत्सम्पूर्णमित्यापि ! ।
पुरुषाश्रितमेवास्ति श्रुतिरुद्घोषितं भृशम् ॥३४॥

प्रवहन्त्यो यथा नद्यः कोशि गण्डकिनामभिः ।
सागरे संश्रयन्तीमा नामरूपादिलोपिताः ॥३५॥

तथैव षोडशकला आत्मनः पुरुषाश्रिताः ।
आत्मन्येवविलीयन्ते ताः सर्वाः पुरुषायिताः ॥३६॥

नामरूपादयः सर्वे लुप्यन्ते पुरुषाश्रिताः ।
कलाहीनाऽमृतमया नद्यः सागरगा इव ॥३७॥

ज्ञानवानमृतो भूत्वा याति मृत्युभयं न हि ।
आत्मज्ञानी यतो भूत्वा निर्भ्रान्तिश्चापि निर्भयः ॥३८॥

रथनाभौ यथैवाऽऽरा मिलन्त्येकत्र केन्द्रिताः ।
तथैव षोडश कला आत्मन्येव हि केन्द्रिताः ॥३९॥

स एव पुरुषः सौम्य ! ज्ञातव्योऽस्ति विचारय ।
एनं ज्ञाते सति भृशं मृत्युं जेष्यसि निश्चितम् ॥४०॥

गुरुः –
अन्त्ये गुरुः पिप्लादश्छात्रानुपदिशत्यहो !
शिष्यान् चिरन्तनं ज्ञानं लक्ष्यीकृत्य स्वकानिदम् ॥४१॥

पिप्पलादः –
जानाम्यहं परं ब्रह्म ज्ञातव्यमिदमेव हि ।
इतः परं किमप्यन्यज्ज्ञातव्यं वस्तु नास्त्यहो ! ॥४२॥

गुरुः –
श्रुत्वा तदुपदेशं तेऽभवन् शिष्याः कृतार्थकाः ।
गुरुं सम्मान्य चरणौ पूजयन्तीदमब्रुवन् ॥४३॥

भवानस्मत् पितेवाऽस्ति ह्यविद्यातमनाशकः ।
अज्ञानान्धं विनिष्काश्य ह्यन्तर्ज्योतिप्रकाशकः ॥४४॥

पिप्पलादं भवन्तं ते सहस्राधिकवन्दनम् ।
नमस्कारं वयं कुर्मः कृतार्थस्तेऽभिनन्दनम् ॥४५॥

### शान्तिपाठः

ॐ भद्रं कर्णेभिः शृणुयाम देवा ! भद्रं पश्येमाऽक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर् व्यशेमहि देवहितं यदायुः ॥१॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्वदेवाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥२॥

ॐ शान्तिः ! ॐ शान्तिः !! ॐ शान्तिः !!!

॥ इति प्रश्नोपनिषत्कारिका ॥

❀❀❀

ॐ तत्सद्ब्रह्मणे नमः

# मुण्डकोपनिषत्कारिका

भावाऽभावपदातीतं भावाऽभावात्मकञ्च यत् ।
तद्वन्दे भावनातीतं स्वात्मभूतं परं महः ॥

शान्तिपाठः

ॐ भद्रं कर्णेभिः श्रृणुयाम देवाः भद्रं पश्येमाऽक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥१॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

श्रुतिः

पूर्वं सर्वेषु देवेषु ब्रह्मैवाऽऽविरभूत् प्रभोः ।
स्रष्टा त्रिभुवनस्याऽभूद् रक्षकोऽपि स एव हि ॥१॥

अथर्वणे ज्येष्ठपुत्रे सर्वविद्यासमाश्रिताम् ।
उपादिशद् ब्रह्मविद्यां सोऽयं ब्रह्मा क्रमादिह ॥२॥

ब्रह्मविद्यामथर्वाऽपि स्वशिष्यायाऽङ्गिरेऽददात् ।
अङ्गी च तां ब्रह्मविद्यां भारद्वाजाय दत्तवान् ॥३॥

भारद्वाजः सत्यवहस्तां विद्यामपरां पराम् ।
ऋषयेऽङ्गिरसे प्रादाद् ब्रह्मविद्यां सदुत्तामाम् ॥४॥

शौनकर्षिः पर्यपृच्छद् ऋषिमङ्गिरसं पुनः ।
किं ज्ञात्वा ज्ञायते ब्रह्मन् ! सर्वं दृश्यमनुत्तमम् ॥५॥

अङ्गिराः –
द्वे विद्ये प्रतिपत्तव्ये परा चैवाऽपरा भृशम् ।
बोध्यमेतत् त्वया सौम्य ! वदन्ति ब्रह्मवेदिनः ॥६॥

शौनकः –
का काऽस्ति ? भगवन् ! विद्ये शुश्रूषुरधुना त्वहम् ।
यज्ज्ञात्वा सम्भवेद् ब्रह्मज्ञानं भवति निश्चतम् ॥ ७॥

अङ्गिराः –
जानीहि ऋग्यजुः सामाऽथर्ववेदादयोऽपरा ।
यथाऽक्षरात्मनो ज्ञानं भवेत् सा तु परा स्मृता ॥८॥

किं तदक्षरमात्मेति कथं तच्चिन्तनं भवेत् ?
आज्ञापयतु मामेवं तत्स्वरूपं सलक्षणम् ॥९॥

अङ्गिराः –
तददृश्यं ब्रह्म वेद्यमग्राह्यमशरीरकम् ।
चक्षुःश्रोत्रपाणिपादवर्णहीनमगोत्रकम् ॥१०॥

अस्ति सर्वगतश्चाऽऽत्मा विभुर्नित्यः परात्परः ।
अव्ययोऽतीव सूक्ष्मः स व्यापको जगदीश्वरः ॥११॥

आत्माऽविनाशी सम्पूर्णभूतानां मुख्यकारणम् ।
विवेकिनः प्रपश्यन्ति सर्वतस्तं प्रतिक्षणम् ॥१२॥

शौनकः –
तदक्षरं ब्रह्म कथं सृष्टिं प्रकुरुते प्रभो !
शुश्रूषुरधुनाऽहं तद् गुरो ! ज्ञातुं समुत्सुकः ॥१३॥

अङ्गिराः –

लूताकृमिर्यथा जालं निष्कासयति तत्पुनः ।
स्वयं गिलति पृथ्वी चौषधान्युत्पादयत्यपि ॥१४॥

उत्पद्यन्ते यथा लोमनखाद्याः प्राणिनस्तथा ।
सर्वं विश्वमुदयते ब्रह्मणो ह्यक्षरात् सतः ॥१५॥

स्वयं ब्रह्म स्थूलरूपं तपसः समुपद्यते ।
ततो जलं ततोऽन्नानि प्राणाः सत्यं मनः क्रमात् ॥१६॥

ततो लोकाश्च कर्माणि ह्यमृताख्यं फलं ततः ।
उत्पद्यन्ते क्रमादेभिर्बन्धनानि भवन्त्यहो ! ॥१७॥

यः सर्वमेतद् जानाति विशेषज्ञो भवेत् स्वतः
अक्षरब्रह्मणः सत्यं जायते सचराचरम् ॥१८॥

जनस्याऽविद्यया ग्रस्तस्य भवेदिह दुर्गतिः ।
अन्धेन नीयमानस्य यथाऽन्धस्याऽस्ति दुर्गतिः ॥१९॥

अज्ञान्यविद्यया ग्रस्तः कृतार्थोऽस्मीति मन्यते ।
कर्मणां फलनाशात् स स्वर्गाच्च निपतत्यहो ! ॥२०॥

इष्टापूर्तादिकं श्रेष्ठंमन्यान् मूढजनान् परम् ।
श्रेयस्करं नान्यदस्ति स्वर्गः श्रेष्ठः परं धनम् ॥२१॥

स्वर्गलोके फलं भुक्त्वा धरायां निपतत्यसौ ।
मनुष्यादपि तुच्छायां योन्यां स निपतत्यहो ! ॥२२॥

अरण्येऽपि वसन्ति स्म शान्तास्ते ज्ञानिनो जनाः ।
श्रद्धातपः सेवमाना भिक्षावृत्तिं प्रकुर्वते ॥२३ ॥

सूर्यद्वारं प्रविशन्तः पापं प्रक्षालयन्ति ते ।
आरोहन्त्युपरि यत्र नित्यं ब्रह्म सनातनम् ॥२४॥

शौनकः –
तीव्रवैराग्ययुक्तोऽपि जनः कस्योपदेशतः ।
गच्छत्युपरि मुक्तः स गुरो ! वदतु मामिह ॥२५॥

अङ्गिराः –
प्राप्तव्याः कर्मणाऽनित्या लोका जानीहि तानिह ।
भव त्वं सौम्य ! निर्वेदं सम्परीक्ष्य पुनः पुनः ॥२६॥

कथञ्चिदापि नाप्तव्यं नित्यं सद्वस्तु कर्मणा ।
एवं ज्ञात्वा सदा बोध्यं नित्यं सद् ब्रह्म चिन्तनम् ॥२७॥

शौनकः –
कथं सद् ब्रह्म बोद्धव्यं गम्यं केन सह प्रभो !
भवानाज्ञापयेच्चेतच्छृणुयामधुना प्रभो ॥२८॥

अङ्गिराः –
सौम्य ! त्वं ब्रह्म बोधार्थं समित्पाणिर्विनीतवाक् ।
प्रगच्छ विनयो भूत्वा ब्रह्मज्ञगुरुसन्निधिम् ॥२९॥

स शिष्यं प्रति जिज्ञासुं ब्रह्मज्ञानार्थमागतम् ।
गुरुर्दयार्द्रहृदयः सुष्ठु ब्रह्मोपदिश्यति ॥३०॥

शौनकः –
अपराब्रह्मविद्यायाः कृतं सङ्क्षिप्तवर्णनम् ।
मद्बोधार्थं पराविद्यामाज्ञापयतु हे गुरो ! ॥३१॥

हे सौम्य ! जानीहि सदा सत्यं ब्रह्म त्वमक्षरम् ।
नामरूपादयो भावा जीवास्तस्माद् भवन्त्यहो ! ॥३२॥

अग्नेर्यथा विस्फुलिङ्गा उत्पद्यन्ते सहस्रशः ।
पुनरग्नौ विलीयन्ते ते, ब्रह्मणि तथा जगत् ॥३३॥

शौनकः –
नामरूपादिभिः शून्यं विकारेभ्यः परात्परम् ।
नेति नेतीति यच्छेशं तदव्यक्तं परात्परम् ॥३४॥

सनातनं ब्रह्मणो यत् तद् रूपं पारमार्थिकम् ।
गुरो ! तदाज्ञापयतु प्रार्थयेऽहमकिञ्चनः ॥३५॥

अङ्गिराः –
नित्यं तदक्षरं ब्रह्माऽन्तःस्थं बाह्यममूर्तकम् ।
प्राणहीनं मनोहीनमजन्माऽस्ति परात्परम् ॥३६॥

हंसः पुरुषरूपेण सर्वप्राणिषु वर्तते ।
तद् दिव्यरूपं स्वान्तःस्थं सर्वात्मनि विवर्तते ॥३७॥

शौनकः –
इन्द्रियाणि मनः प्राणा जायन्ते ब्रह्मणो ध्रुवम् ।
पृथिव्यप्तेजोवायुश्च गगनं सच्चिदात्मनः ॥३८॥

यदस्ति कारणं तद्धि कार्येऽपि समुदेति हि ।
अप्राणो ह्यमना ब्रह्म कथं सृष्टिं प्रकुर्वते ॥३९॥

अङ्गिराः –
अतीव रम्यः प्रश्नोऽयमस्माज्ज्ञानं विवर्द्धते ।
इदं ब्रह्मैव सर्वत्र सृष्टिमन्तर्विवर्तते ॥४०॥

**यदेतद् दृश्यते सर्वं सिर्जितं यच्चराचरम् ।**
**विराड्रूपमिदं तस्य परस्य ब्रह्मणोऽस्ति हि ॥४१॥**

द्युलोको यस्य मूर्द्धाऽस्ति सूर्यचन्द्रौ द्विलोचने ।
दिशः कर्णौ वेदवाणी पवनैः प्राणधारणम् ॥४२॥

विश्वं यस्याऽस्ति हृदयं पृथिवी चरणौ ततः ।
अन्तरात्मा परं ब्रह्म तदेवाऽव्ययमक्षरम् ॥४३॥

तत् सर्वेषामुपादानं परमात्मा सनातनम् ।
द्रष्टा श्रोता तथा मन्ता विज्ञाताऽस्ति निरञ्जनम् ॥४४॥

हूयन्ते प्राणिनः सर्वे पञ्चाग्नावुदयन्त्यतः ।
प्राणिनोऽपि हि ते सर्वे ब्रह्मणश्चेतयन्त्य हो ! ॥४५॥

शौनकः –

ब्रह्मणा सिर्जितां सृष्टिं प्रवदन्तु चराऽचराम् ।
शङ्का मनसि सञ्जाता कथमुत्पद्यते हि सा ॥४६॥

अङ्गिराः –

अक्षरब्रह्मणो जातं सूर्याख्याऽग्नेः समिन्धनम् ।
तत एव समुत्पत्तिः सोमस्याऽप्यभवत् खलु ॥४७॥

सोमान्मेघोदयो जातस्ततो हि जलवर्षणम् ।
मेघे प्रवर्षिते भूमावोषध्यः प्रभवन्ति हि ॥४८॥

जना अन्नौषधीर्जग्ध्वा स्त्रीषु वीर्यं वपन्त्यहो ! ।
तदाहुत्या समुत्पत्तिः प्रजानां बहुशोऽभवत् ॥४९॥

तदक्षराद् ब्रह्मणो हि वेदा ऋग्यजुषोऽभवन् ।
दीक्षा यज्ञः क्रतुस्तस्माद् यजमानश्च दक्षिणा ॥५०॥

संवत्सराणां लोकानामुत्पत्तिर्ब्रह्मणोऽभवत् ।
सूर्याचन्द्रमसोरेवं समुत्पत्तिस्ततोऽक्षरात् ॥५१॥

अक्षरादेव कर्माङ्गभूताः सम्पूर्णदेवताः ।
उत्पद्यन्ते हि साध्याश्च मनुष्याः पशुपक्षिणः ॥५२॥

प्राणोऽपानस्तथा व्यानः समानोदानमेव च ।
पञ्चप्राणा ब्रह्मचर्यं तपः श्रद्धा ततोऽभवन् ॥५३॥

सप्तेन्द्रियाणि शिरसस्तत एवाऽभवन् भृशम् ।
दीप्तिभिः सहितान्येव सप्तैव विषया अपि ॥५४॥

सप्तानां विषयाणां च ज्ञानं सञ्चारयन्ति च ।
स्थानानामपि सप्तानां प्राकट्यमभवत् ततः ॥५५॥

मनुष्यादिषु देहेषु सप्त सप्त प्रतिष्ठितम् ।
अभूत् तदक्षरादेव समुत्पत्तिर्हि निश्चितम् ॥५६॥

उत्पन्ना अक्षरादेव समुद्राश्च सपर्वताः ।
नदा नद्यश्च सम्पूर्णा रसयुक्तौषधानि च ॥५७॥

एवं सर्वेषु भूतेषु स आत्मा परिवेष्टितः ।
हृद्यन्तःकरणे साक्षी भूत्वा वसति चेतनः ॥५८॥

अतः सम्पूर्णसंसारे दृश्यं कर्माखिलं जगत् ।
ज्ञानं विद्यास्तत्पुरुषां विद्धि ब्रह्माऽमृतं जगत् ॥५९॥

**हृद्यन्तःकरणे वस्ता ब्रह्म जानाति यो जनः ।**
**जीवन्मुक्तः स भवति ह्यविद्या तस्य नश्यति ॥६०॥**

शौनकः –

रूपहीनं स्वयं ब्रह्म ह्यवाङ्मनसगोचरम् ।
हे ब्रह्मन् ! तत् कथं ज्ञेयं ? ज्ञातुमत्यन्तदुष्करम् ॥६१॥

अङ्गिराः –

**प्रकाशरूपं सद्ब्रह्म राजते हृदयान्तरे ।**
**गुहाचरं वदन्त्येनं सर्वदैतन्महत्पदम् ॥६२॥**

श्वासोच्छ्वासं प्रकुर्वन्ति सर्वे तस्मिन् चलन्त्यहो !
तच्च पश्यन्ति शृण्वन्ति तेन जीवन्ति जन्तवः ॥६३॥

ब्रह्माऽस्ति सदसद्रूपं वरेण्यं च विभूतिमत् ।
विज्ञानादविदूरं तद् वरिष्ठं ज्ञेयमस्ति तत् ॥६४॥

तेनैव सूर्यस्तपति तेन वायुः प्रवात्यहो !
जलं चलति तेनैव तेनाऽग्निः प्रज्ज्वलत्यहो ॥६५॥

निर्मलत्वं जले तेन गगने तेन नीलिमा ।
धराऽधारस्तदेवाऽस्ति सर्वशक्तिस्तदेव हि ॥६६॥

यद्यद् विभूतिमत् सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवाऽवगच्छ त्वं तस्य तेजोंऽशसम्भवम् ॥६७॥

शौनकः –

'त्वमेवं सौम्य ! जानीहि' कथिते ज्ञायते कथम् ?
मनसोऽभिनिवेशो मे कथं स्यात् तत्र दुस्तरे ॥६८॥

अङ्गिराः –

अणोरणीयानपि यद् दीप्तिमानस्ति ब्रह्म तत् ।
लोकास्तिष्ठन्ति तत्रैव तेन जीवन्ति जन्तवः ॥६९॥

तदक्षरं ब्रह्म विद्धि प्राणा वाङ्मन इत्यपि ।
कुरुष्व वेधनं तस्य तत्सत्यं चाऽमृतं हि तत् ॥७०॥

शौनकः –
गुरो ! कथमहं कुर्यां भणतु ब्रह्मवेधनम् ।
ब्रह्मेन्द्रियातीतमस्ति मायातीतं निरञ्जनम् ॥७१॥

अङ्गिराः –
सौम्येदमिन्द्रियातीतमचिन्त्यं ब्रह्म तत् परम् ।
एतच्चोपनिषद्वेद्यं महदस्त्रसमं परम् ॥७२॥

सुदीर्घोपासना कार्या सुतीक्ष्णशररूपिणी ।
ब्रह्मणे वेधनं कार्यं भावानुगतमेधया ॥७३॥

शौनकः –
धनुः किमनु को वाणो लक्ष्यं किं वेधनं कथम् ?
आज्ञापयतु सुस्पष्टं मनो मे श्रोतुमुत्सुकम् ॥७४॥

अङ्गिराः –
प्रणवो धनुरात्मेषु ब्रह्म तल्लक्ष्यमुच्यते ।
सावधानमना भूत्वा प्रकुर्याद् ब्रह्मवेधनम् ॥७५॥

शौनकः –
आत्माऽतीवाऽस्ति दुर्बोध्यो भूरिशः श्रूयते यदि ।
ज्ञायते किं मया ब्रह्मन् ! चैतज्ज्ञापयतां पुनः ॥७६॥

अङ्गिराः –
द्युलोकः पृथिवी व्योम यस्मिन् प्राणा मनांसि च ।
ओताः प्रोता यत्र सन्ति स आत्मेति विचारय ॥७७॥

जहि त्वमपरां विद्यामात्मनः कुरु चिन्तनम् ।
एतदेव विजानीहि मुक्तये मुख्यसाधनम् ॥७८॥

ओमित्येकाक्षरं ब्रह्म सौम्य ! तं कुरु चिन्तनम् ।
संक्षेपाद् वच्म्यहं वत्स ! सावधानमनाः शृणु ॥७९॥

अरा यथैव संयान्ति रथचक्रे तथैव ताः ।
नाड्योऽस्माकं मिलन्ति स्म हृदयान्तर्निवेशिताः ॥८०॥

तदन्तःस्थः सञ्चरति स्वयमात्मा निरन्तरम् ।
तदेवोङ्कारमात्मानं सौम्य ! ध्यायतु सन्ततम् ॥८१॥

निवार्याऽज्ञानमात्मानं सौम्य ! चिन्तय चेतय ।
सदोङ्कारं चिन्तय स्वं कल्याणमस्तु ते सदा ॥८२॥

सर्वज्ञो योऽस्ति सर्वाऽऽत्मा यो भूर्लोकेऽपि संस्थितः ।
योऽस्माकं हृदयाऽऽकाशे नित्यमात्मा प्रतिष्ठितः ॥८३॥

मनोमयः प्राणशरीरनेता
वस्ता स हृद्यन्तरमस्ति चेतः ।
आनन्द आत्माऽस्ति प्रकाशरूपो
जानाति तं यः स विवेकशीलः ॥८४॥

शौनकः –
अक्षरब्रह्मणो ज्ञानं कृत्वा किं फलमाप्यते ।
ब्रह्मन्नाज्ञापयाऽनेन किं मुक्तिद्वारमाप्यते ॥८५॥

अङ्गिराः –
भिद्यते हृदययग्रन्थिर्ब्रह्मज्ञाने कृते सति ।
चास्य कर्माणि क्षीयन्ते सर्वसंशयाः ॥८६॥

ज्योतिषामपि तज्ज्योतिः परस्मिन् कोषसंस्थितम् ।
कलाविहीन आत्मा स जानात्यात्मज्ञ एव तम् ॥८७॥

शौनकः –

कथं तज्ज्योतिषां ज्योतिर्ब्रह्माऽऽत्मा भवतीत्यतः ।
शुश्रूषुरस्मि हे ब्रह्मन् ! कथं वेदैः प्रचक्षते ॥८८॥

अङ्गिरा –

चकास्ते तत्र सूर्यो न न तारा भान्ति चन्द्रमाः ।
विद्युदग्नी न ज्वलतः शक्तिर्नैतेषु विद्यते ॥८९॥

ब्रह्मणो हि प्रकाशेन भवन्त्येते प्रकाशिताः ।
जडभौतिकवस्तूनि ब्रह्मणो हि चकासते ॥९०॥

**तत् सद् ब्रह्माऽमृतं चाऽस्ति पृष्ठतोऽग्रतोऽपि तत् ।**
**उपर्यधः पार्श्वयोश्च ब्रह्म सर्वत्र विद्यते ॥९१॥**

शौनकः –

भो गुरो ! परमात्मानं बोद्धुं कठिनमस्ति किम् ?
सारल्येन कथं ज्ञेयं निदर्शयतु मां भवान् ॥९२॥

अङ्गिरा –

पक्षिणौ द्वौ सनामानौ वसतो वृक्षकोटरे ।
सहजातावुभौ किन्तु पार्थक्यं शृणु चैतयोः ॥९३॥

द्वयोरेकस्तु स्वादिष्टं फलं भक्षति कर्मणः ।
अन्यो बुभुक्षितश्चाऽऽस्ते मित्रं पश्यति केवलम् ॥९४॥

शौनकः –

ब्रह्मन् ! परोक्षरूपेण यदुक्तं साम्प्रतं भवान् ।
मां तु प्रत्यक्षरूपेण सुस्पष्टं गदतु प्रभो ! ॥९५॥

अङ्गिरा –

जीवात्मा परमात्मानौ वसतो देहपादपे ।
भक्षन् वसति जीवात्मा मधुरं कर्मणः फलम् ॥९६॥

तत्रैवं परमात्मा तु वसत्येव बुभुक्षितः ।
साक्षीरूपेण संपश्यन् सदाऽऽनन्तो विराजते ॥९७॥

एकदेहे वसन् जीवो निमग्नः शोकसागरे ।
महिमानं परेशस्य ज्ञात्वाऽन्योऽभिविराजते ॥९८॥

प्राणानामपि प्राणः सद् (ब्रह्म)ज्ञानी मौनमपेक्षते ।
आत्मक्रीडः क्रियावान् यः श्रेष्ठो (ब्रह्मज्ञः) ज्ञानी विराजते ॥९९॥

शौनकः –

मुमुक्षवे भिक्षवे तु सम्यग् ज्ञानसहायकम् ।
निवृत्तिरूपं हेतुं तं बालको ज्ञातुमुत्सुकः ॥१००॥

अङ्गिरा –

तपस्वी सत्यनिष्ठश्चेद् ब्रह्मचारी जितेन्द्रियः ।
सम्यग्ज्ञाता दोषहीनो मुमुक्षुरात्मदर्शकः ॥१०१॥

सत्येन जयमाप्नोति मिथ्या नैवाऽप्यते ध्रुवम् ।
देवयानमनेनैव शनैर्निर्भयमाप्यते ॥१०२॥

आत्मकामी जनो येन ह्युत्कृष्टं पदमाप्नुयात् ।
यत्राऽस्ति सत्यभाण्डारं रमते तत्र निर्भयः ॥१०३॥

शौनकः –

किं धर्मी तत् किमस्त्यत्र ? ब्रह्मन् सुस्पष्टमुच्यताम् ।
श्रोतुमिच्छुर्भवेद् भद्रं मनो मेऽस्ति समुत्सुकम् ॥१०४॥

अङ्गिरा –

अचिन्त्यरूपं तद् दिव्यं सूक्ष्मात् सूक्ष्मतरं परम् ।
भासमानं भवेन्नित्यं दूराद्दूरतरं परम् ॥१०५॥

परन्त्वाऽऽत्मा तु सर्वेषां समीपतरमस्त्यहो !
सोऽस्ति हि प्राणिनां नित्यं बुद्धिगह्वरमाश्रितः ॥१०६॥

शौनकः –

कान्यन्यानि विशेषाणि साधनानीह सन्त्यहो !
गुरो ! वदतु साक्षान्मां साक्षात्कारार्थमेव तत् ॥१०७॥

अङ्गिरा –

चक्षुषा तपसा वाण्या कर्मभिश्चेन्द्रियैरपि ।
आत्मा न शक्यते ज्ञातुं केनचित् साधनेन सः ॥१०८॥

यदा ज्ञानप्रसादेन बुद्धिः शुद्धिर्भविष्यति ।
आत्मानमभिजानीते तत्त्वज्ञो यदि चिन्तयेत् ॥१०९॥

पञ्चप्राणैः सुसंयुक्तदेहान्तःस्थः परात्परः ।
सूक्ष्म आत्माऽस्ति तज्ज्ञेयो ज्ञानिना सज्जनेन हि ॥११०॥

जनः सकामो यद्यत्र फलमाप्नोति तादृशम् ।
स तु भुक्तिमवाप्नोति निष्कामो यदि मन्यते ॥१११॥

शौनकः –

सर्वलाभसमुत्कृष्ट आत्मलाभः समीरितः ।
नाऽयमात्मा प्रवचनात् सुलभ्यः सौम्य ! वर्तते ॥११२॥

अङ्गिरा –

नाऽयमात्मा व्याख्यया वा मेधया श्रवणेन वा ।
प्राप्तव्यः सौम्य ! जानीहि नाऽन्येन सुलभोऽस्ति सः ॥११३॥

जिज्ञासते य आत्मानं यो ज्ञानं कुरुतेऽनिशम् ।
स आत्मानमवाप्नोति स्वस्वरूपं वृणोति सः ॥११४॥

शौनकः –

बलं तपश्च सन्यास आत्मदर्शनसाधनम् ।
अप्रमादश्च कथ्यन्ते फलं वदतु भो गुरो ! ॥११५॥

अङ्गिरा –

बलप्रमादहीनेनाऽयमात्मा लभ्यते न हि ।
लिङ्गहीनेन तपसा वाऽन्यस्याऽपि प्रसादतः ॥११६॥

अप्रमादेन तपसा यो नित्यं यतते जनः ।
अयमात्मा तमेवैतद् ब्रह्म धाम निवेशयेत् ॥११७॥

यः शुद्धचित्तो वेदान्तज्ञानवानस्ति सज्जनः ।
ब्रह्मज्ञानं स कुरुते भवेद् ब्रह्म सनातनम् ॥११८॥

शौनकः –

ब्रह्मन् ! मोक्षस्य काले हि गतिर्जीवस्य कीदृशी ?
अत्र मे तीव्रजिज्ञासा श्रोतुमिच्छामि साम्प्रतम् ॥११९॥

देहारम्भे समाविष्टाः सर्वे प्राणादिदेवताः ।
स्वकीये कारणे सत्यं प्रयान्त्यन्ते मिलन्ति च ॥१२०॥

ज्ञानिनः कर्मणाः साकं विज्ञानाऽऽत्माऽपि गच्छति ।
अव्यये ब्रह्मणि तत एकीभावा भवन्त्यहो ! ॥१२१॥

यथा नद्यो नदाः सर्वे नामरूपादिहीनतः ।
एकाकारस्वरूपेण समुद्रे सम्मिलन्त्यहो ! ॥१२२॥

तथैव विबुधो बुद्धो नामरूपादिहीनतः ।
परात्परं परब्रह्म भूत्वा मुक्तो भवत्यहो ! ॥१२३॥

योो विन्दतीह सद्ब्रह्म स्वयं ब्रह्म भवत्यसौ ।
भवन्ति तत्कुले जाता जना ब्रह्मविदो ध्रुवम् ॥१२४॥

पापात् परतरं यान्ति तरन्ति शोकसागरम् ।
भित्वा स्वं हृदयग्रन्थिं विमुक्ता यान्ति ब्रह्मणि ॥१२५॥

शौनकः –
विधिं विद्याप्रदानाय गुरो ! भणतु मामिह ।
भवेदथर्ववेदस्य शुश्रूषुरहमस्मि भो ! ॥१२६॥

अङ्गिरा –
क्रियावानधिकारी यो वेदज्ञो ब्रह्मविद् भवेत् ।
श्रद्धापूर्वकमेकर्षौ वह्नौ होमो विधीयते ॥१२७॥

विधिपूर्वकमेतद् यो धारयेच्च शिरोव्रतम् ।
धरति ब्रह्मविद्यां स तस्मै देया विशेषतः ॥१२८॥

अन्त्ये श्रुतिर्वदत्येवं–पूर्वकालेऽङ्गिरा गुरुः ।
शिरोव्रतं च सविधिं शौनकं समुपादिशत् ॥१२९॥

शिरोव्रतं च सविधिं नानुष्ठानं करोति यः ।
ब्रह्मविद्यां न शक्नोति पठितुं यत्नवानपि ॥१३०॥

शान्तिपाठः

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

इति मुण्डकोपनिषत्कारिका ॥

❀❀❀

ॐ तत्सद्ब्रह्मणे नमः ।

# माण्डूक्योपनिषत्कारिका

जाग्रदादित्रयोन्मुक्तं जाग्रदादिमयं तथा ।
ओङ्कारैकसुसंवेद्यं यत्पदं तन्नमाम्यहम् ॥

शान्तिपाठः

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः ! शान्तिः !! शान्तिः !!

शिष्यः –
माण्डूक्योपनिषद्यन्तरोङ्कारब्रह्मवर्णनम् ।
अस्ति चेच्छ्रोतुमिच्छामि कुर्वे नम्रनिवेदनम् ॥१॥

गुरुः –
भूतं भवद् भविष्यच्च ओमित्येकाक्षरात्मकम् ।
सर्वं जानीहि सौम्य ! त्वं व्याख्यानं यच्च विस्तृतम् ॥२॥

सर्वं वस्त्वेतदोङ्कारं तद्बाह्यं नैव दृश्यते ।
त्रिकालातीतमेतच्च दृष्टमोङ्कारमक्षरे ॥३॥

ब्रह्मैवाऽस्ति जगत्सर्वं दृश्यते यच्चराचरम् ।
जगदात्माऽस्ति ब्रह्मैव तच्च पादचतुष्टयम् ॥४॥

एतदेव महावाक्यमथर्वान्तर्गतं शृणु ।
उपदेशात्मकं चैव ह्यनुभूत्यात्मकं तथा ॥५॥

त्वमग्रेसर बोधार्थं वेदञ्चोपनिषत् पठ ।
ततः परं च बोधार्थं गुरोः सन्निधिमाश्रय ॥६॥

शिष्यः –
के ते सन्ति चतुष्पादा आत्मनः कथ्यतां गुरो !
इदानीं श्रोतुमिच्छामि क्रमशो वक्तुमर्हति ॥७॥

गुरुः –
यत्स्थानं जाग्रदेवाऽस्ति बहिष्प्रज्ञसमन्वितम् ।
एकोनविंशमुखयुक् सप्ताङ्गैः सुसमन्वितम् ॥८॥

एष वैश्वानरो देवो विषयस्थूलभुग् यतः ।
सैषोऽस्ति प्रथमः पादः श्रुतिर्निगदति स्वयम् ॥९॥

यत्स्थानं स्वप्न एवाऽस्ति अन्तःप्रज्ञसमन्वितम् ।
एकोनविंशमुखयुक् सप्ताङ्गैः सुसमन्वितम् ॥१०॥

सूक्ष्मविषयभोक्तारं पुनर्जानीहि तैजसम् ।
आत्मनो द्वितयं पादं मनसा मननं कुरु ॥११॥

भोक्तुमिच्छा यदा नास्ति न स्वप्नमपि दृश्यते ।
सैषा सुषुप्त्यवस्थाऽस्ति श्रुतिर्भणति सन्ततम् ॥१२॥

प्रकृष्टं ज्ञानरूपं तदानन्दमयसंस्थितिः ।
आनन्दभुग्युतं चेतोमुखं प्राज्ञसमन्वितम् ॥१३॥

आत्मनस्तृतीयं पादं सौम्य ! जानीहि सुन्दरम् ।
साधुभिः कथ्यते चैष ब्रह्मानन्दसहोदरः ॥१४॥

सर्वज्ञः प्राज्ञ आत्माऽऽस्ते ह्यन्तर्यामी स ईश्वरः ।
उत्पत्तिविलयस्थानं जीवयोनिः परात्परम् ॥१५॥

शिष्यः –
तुरीयतत्त्वं सत्तत्त्वं किमेतज्ज्ञायते कथम् ?
जिज्ञासा मानसे ब्रह्मन् ! स्पष्टं निगदतु प्रभो ! ॥१६॥

गुरुः –
यदुक्तं भवता सत्यं मया निर्दिश्यते शृणु ।
चित्तत्त्वं परमं सत्यं सावधानमना भव ॥१७॥

नाऽन्तः प्रज्ञं न च बहिष्प्रज्ञं प्राज्ञो न चोभयः ।
न प्रज्ञानघनश्चास्ति सोऽप्रज्ञस्तु किमुच्यते ॥१८॥

अदृष्टमव्यवहार्यमग्राह्यमप्यलक्षणम् ।
अचिन्त्यमव्यपदेश्यं प्रपञ्चोपशमं यदा ॥१९॥

शिवं शान्तमथाऽद्वैतमेकात्मप्रत्ययं यदा ।
तुरीयतत्त्वं चिदाऽऽत्मा साक्षी सज्ज्ञातुमर्हति ॥२०॥

ओङ्कारं परमं चाऽऽत्माऽक्षरमेकं सुनिश्चितम् ।
विषयादपि भिन्नो य आत्माऽस्तीह गुहास्थितः ॥२१॥

त्रयो मात्रात्मकाः पादा अ-उ-म त्र्यक्षरात्मकाः ।
ओङ्कारात्मकवर्णा ये चैतेषां कुरु चिन्तनम् ॥२२॥

अकारः प्रथमा मात्रा स्थानं वैश्वानरोऽस्य यत् ।
सोऽयं जागरितं स्थानं त्वमेतत् कुरु चिन्तनम् ॥२३॥

ओङ्काराक्षरमेतद् यो ज्ञात्वा कुर्यादुपासनाम् ।
भरन्ते कामनास्तस्य स महापुरुषायते ॥२४॥

स्वप्न एवाऽस्ति यत्स्थानं वस्तुतस्तत्तु तैजसम् ।
ओमक्षरद्विमात्राऽस्ति उकारो मध्यमाक्षरः ॥२५॥

यो ज्ञात्वा तमुपासीत ज्ञानं सन्ततिवर्धनम् ।
भवेदस्याऽपि वंशे च जायेरन् ब्रह्मचिन्तकाः ॥२६॥

यस्य स्थानं सुषुप्त्यस्ति तद्धि प्राज्ञं चिरन्तनम् ।
ओमक्षरेतृतीयाऽस्ति मात्रा सा माऽक्षरात्मिका ॥२७॥

माऽक्षरात्मकमात्रां तु जानीयाल्लयकारणम् ।
ओमित्येकाक्षरं ब्रह्म चिन्तनीयं विशेषतः ॥२८॥

य इत्थं साधु जानाति स तु विश्वं प्रबोधते ।
विश्वं मिमीत मायेत सम्भवेत् तल्लयोऽपि सः ॥२८॥

मात्रारहितमोङ्कारं तुरीयं बिन्दुमात्रकम् ।
(तत्तु नादात्मकं ब्रह्म तुरीयं ब्रह्मवैभवम् ।)
अद्वैतमव्यवहार्यं प्रपञ्चोपशमं शिवम् ॥२९॥

आत्मैवोङ्काररूपोऽयमित्थं यः सुष्ठु बोधति ।
स तु साधु प्रवेशार्हः स्वस्यैवाऽऽत्मानमात्मनि ॥३०॥

शिष्यः –
कारिका बोधगम्याऽस्य यदि स्यात् तस्य वर्णनम् ।
कार्यं शुश्रूषुरस्म्यद्य विनतोऽहमकिञ्चनः ॥३१॥

गुरुः –
प्रश्नः प्रासङ्गिकस्तेऽस्ति नाम्नी माण्डूक्यकारिका ।
प्रणीता गौडपादेन रुचिरार्था निबोधताम् ॥३२॥

प्रौढाऽत्यन्तगभीरार्था त्वादृक्षं कठिनाऽपि च ।
अजातवादसिद्धान्तो यस्मिन्नस्ति प्रतिष्ठितः ॥३३॥

तदेषा कारिकाऽप्यत्र प्रस्तौमि त्वां यथातथम् ।
बोद्धुमेकमना भूत्वा सावधानतया पठ ॥३४॥

शान्तिपाठः

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाऽक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

॥ इति माण्डूक्योपनिषत्कारिका ॥

अथ गौडपादकृता
माण्डूक्यकारिका प्रारभ्यते

# १. आगमप्रकरणम्

बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥१॥

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥२॥

विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥३॥

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।
आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ॥४॥

त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥५॥

प्रभवः सर्वभावानां सतामिति विनिश्चयः ।
सर्वं जनयति प्राणश्चेतोंऽशून्पुरुषः पृथक् ॥६॥

विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥७॥

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।
कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥८॥

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥९॥

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥१०॥

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः ॥११॥

नात्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक्सदा ॥१२॥

द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥१३॥

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥१४॥

अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥१५॥

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥१६॥

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥१७॥

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥१८॥

विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥१९॥

तैजसस्योत्वविज्ञान उत्कर्षे दृश्यते स्फुटम् ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥२०॥

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥२१॥

त्रिषु धामसु यस्तुल्यं सामान्यं वेत्ति निश्चितः ।
स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥२२॥

अकारो नयते विश्वमुकारश्चापि तैजसम् ।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥२३॥

ओङ्कारं पादशो विद्यात्पादा मात्रा न संशयः ।
ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२४॥

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥२५॥

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥२६॥

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥२७॥

प्रणवं हीश्वरं विद्यात्सर्वस्य हृदि संस्थितम् ।
सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥२८॥

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥२९॥

इति माण्डूक्यकारिकायां आगमप्रकरणम् ।

# माण्डूक्यकारिका
## २. वैतथ्यप्रकरणम्

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः ।
अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥१॥

अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥२॥

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।
वैतथ्यं तेन वै प्राप्तं स्वप्नमाहुः प्रकाशितम् ॥३॥

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥४॥

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः ।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥५॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥६॥

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥७॥

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम् ।
तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥८॥

स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥९॥

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः ॥१०॥

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ।
क एतान्बुध्यते भेदान्को वै तेषां विकल्पकः ॥११॥

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥१२॥

विकरोत्यपरान्भावानन्तश्चित्ते व्यवस्थितान् ।
नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥१३॥

चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः ।
कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥१४

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।
कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥१५॥

जीवं कल्पयते पूर्वं ततो भावान्पृथग्विधान् ।
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः ॥१६॥

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥१७॥

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥१८॥

प्राणादिभिरनन्तैश्च भावैरेवैर्विकल्पितः ।
मायैषा तस्य देवस्य यया सम्मोहितः स्वयम् ॥१९॥

प्राण इति प्राणविदो भूतानीति च तद्विदः ।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥२०॥

पादा इति पादविदो विषया इति तद्विदः ।
लोका इति लोकविदो देवा इति च तद्विदः ॥२१॥

वेदा इति वेदविदो यज्ञा इति च तद्विदः ।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥२२॥

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः ।
मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः ॥२३॥

काल इति कालविदो दिश इति च तद्विदः ।
वादा इति वादविदो भुवनानीति तद्विदः ॥२४॥

मन इति मनोविदो बुद्धिरिति च तद्विदः ।
चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥२५॥

पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥२६॥

लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः ।
स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥२७॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।
स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा ॥२८॥

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।
तञ्चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥२९॥

एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।
एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः ॥३०॥

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥३१॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥३२॥

भावैरसद्भिरेवायमद्वयेन च कल्पितः ।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥३३॥

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।
न पृथङ् नापृथक् किञ्चिदिति तत्त्वविदो विदुः ॥३४॥

वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः ।
निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः ॥३५॥

तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिम् ।
अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ॥३६॥

निस्तुतिर्निनमस्कारो निःस्वधाकार एव च ।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥३७॥

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ।
तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥३८॥

॥ इति माण्डूक्यकारिकायां वैतथ्यप्रकरणम् ॥

# माण्डूक्यकारिका
## ३. अद्वैतप्रकरणम्

उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ।
प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥१॥

अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् ।
यथा न जायते किञ्चिज्जायमानं समन्ततः ॥२॥

आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः ।
घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम् ॥३॥

घटादिषु प्रलीनेषु घटाकाशादयो यथा ।
आकाशे सम्प्रलीयन्ते तद्वज्जीवा इहात्मनि ॥४॥

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥५॥

रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ।
आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥६॥

**नाकाशस्य घटाकाशो विकारावयवौ यथा ।**
**नैवात्मनः सदा जीवो विकारावयवौ तथा ॥७॥**

यथा भवति बालानां गगनं मलिनं मलैः ।
तथा भवत्यबुद्धानामात्मापि मलिनो मलैः ॥८॥

मरणे सम्भवे चैव गत्यागमनयोरपि ।
स्थितौ सर्वशरीरेषु आकाशेनाविलक्षणः ॥९॥

सङ्घाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः ।
आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥१०॥

रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ।
तेषामात्मा परो जीवः खं यथा सम्प्रकाशितः ॥११॥

द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम् ।
पृथिव्यामुदरे चैव यथाकाशः प्रकाशितः ॥१२॥

जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।
नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥१३॥

जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्तितम् ।
भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥१४॥

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥१५॥

आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ।
उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥१६॥

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥१७॥

अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।
तेषामुभयथा द्वैतं तेनायं न विरुद्ध्यते ॥१८॥

मायया भिद्यते ह्येतन्नान्यथाजं कथञ्चन ।
तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत् ॥१९॥

अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥२०॥

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यति ॥२१॥

स्वाभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥२२॥

भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः ।
निश्चितं युक्तियुक्तञ्च यत्तद्भवति नेतरत् ॥२३॥

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते तु सः ॥२४॥

सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते ।
को न्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥२५॥

स एष नेति नेतीति व्याख्यातं निह्नुते यतः ।
सर्वमग्राह्यभावेन हेतुनाजं प्रकाशते ॥२६॥

सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।
तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥२७॥

असतो मायया जन्म तत्त्वतो नैव युज्यते ।
बन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥२८॥

यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः ।
तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥२९॥

अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः ।
अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥३०॥

मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम् ।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥३१॥

आत्मसत्यानुबोधेन न सङ्कल्पयते यदा ।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥३२॥

अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ।
ब्रह्मज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥३३॥

निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।
प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः ॥३४॥

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते ।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥३५॥

अजमनिद्रमस्वप्नमनामकमरूपकम् ।
सकृद्विभातं सर्वज्ञं नोपचारः कथञ्चन ॥३६॥

सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः ।
सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥३७॥

ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ।
आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥३८॥

अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः ।
योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥३९॥

मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥४०॥

उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥४१॥

उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥४२॥

दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥४३॥

लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥४४॥

नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।
निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ॥४५॥

यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥४६॥

स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम् ।
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥४७॥

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥४८॥

॥ इति माण्डूक्यकारिकायां अद्वैतप्रकरणम् ॥

# माण्डूक्यकारिका

## ४. अलातशान्तिप्रकरणम्

ज्ञानेनाकाशकल्पेन धर्मान्यो गगनोपमान् ।
ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम् ॥१॥

अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।
अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥२॥

भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि ।
अभूतस्यापरे धीरा विवदन्तः परस्परम् ॥३॥

भूतं न जायते किञ्चिदभूतं नैव जायते ।
विवदन्तोऽद्वया ह्येवमजातिं ख्यापयन्ति ते ॥४॥

ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।
विवदामो न तैः सार्धमविवादं निबोधत ॥५॥

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥६॥

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥७॥

स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥८॥

सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।
प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥९॥

जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।
जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥१०॥

कारणं यस्य वै कार्यं कारणं तस्य जायते ।
जायमानं कथमजं भिन्नं नित्यं कथञ्च तत् ॥११॥

कारणाद्यद्यनन्यत्वमतः कार्यमजं यदि ।
जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम् ॥१२॥

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥१३॥

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।
हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥१४॥

हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।
तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥१५॥

सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया ।
युगपत्सम्भवे यस्मादसम्बन्धो विषाणवत् ॥१६॥

फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति ।
अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥१७॥

यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः ।
कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥१८॥

अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः ।
एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥१९॥

बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः ।
न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥२०॥

पूर्वापरापरिज्ञानमजातेः परिदीपकम् ।
जायमानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते ॥२१॥

स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते ।
सदसत्सदसद्वापि न किञ्चिद्वस्तु जायते ॥२२॥

हेतुर्न जायतेऽनादेः फलञ्चापि स्वभावतः ।
आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥२३॥

प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः ।
संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥२४॥

प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात् ।
निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥२५॥

चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ।
अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥२६॥

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ।
अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥२७॥

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।
तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥२८॥

अजातं जायते यस्मादजातिः प्रकृतिस्ततः ।
प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यति ॥२९॥

अनादेरन्तवत्त्वञ्च संसारस्य न सेत्स्यति ।
अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥३०॥

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।**
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥**

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥३२॥

सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।
संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥३३॥

न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥३४॥

मित्राद्यैः सह सम्मन्त्र्य सम्बुद्धो न प्रपद्यते ।
गृहीतं चापि यत्किञ्चित्प्रतिबुद्धो न पश्यति ॥३५॥

स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ।
यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥३६॥

ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते ।
तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥३७॥

उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ।
न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन ॥३८॥

असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः ।
असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥३९॥

नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा ।
सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥४०॥

विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत् ।
तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥४१॥

उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम् ।
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥४२॥

अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये ।
जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति ॥४३॥

उपलम्भात्समाचारान्मायाहस्ती यथोच्यते ।
उपलम्भात्समाचारादस्ति वस्तु तथोच्यते ॥४४॥

जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥४५॥

एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः ।
एवमेव विजानन्तो न पतन्ति विपर्यये ॥४६॥

ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।
ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥४७॥

अस्पन्दमानमलातमनाभासमजं यथा ।
अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥४८॥

अलाते स्पन्दमाने वै नाभासा अन्यतोभुवः ।
न ततोऽन्यत्र निस्पन्दान्नालातं प्रविशन्ति ते ॥४९॥

न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः ।
विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ॥५०॥

विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुवः ।
न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते ॥५१॥

न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगतः ।
कार्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते ॥५२॥

द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि ।
द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते ॥५३॥

एवं न चित्तजा धर्माश्चित्तं वापि न धर्मजम् ।
एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः ॥५४॥

यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः ।
क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥५५॥

यावद्धेतुफलावेशः संसारस्तावदायतः ।
क्षीणे हेतुफलादेशे संसारं न प्रपद्यते ॥५६॥

संवृत्त्या जायते सर्वं शाश्वतं नास्ति तेन वै ।
सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥५७॥

धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ।
जन्ममायोपमं तेषां सा च माया न विद्यते ॥५८॥

यथा मायामयाद् बीजाज्जायते तन्मयोऽङ्कुरः ।
नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥५९॥

नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा ।
यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते ॥६०॥

यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।
तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ॥६१॥

अद्वयञ्च द्वयाभासं चित्तं स्वप्ने न संशयः ।
अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥६२॥

स्वप्नदृक्प्रचरन्स्वप्ने दिक्षु वै दशसु स्थितान् ।
अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा ॥६३॥

स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक् ।
तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥६४॥

चरञ्जागरिते जाग्रद्दिक्षु वै दशसु स्थितान् ।
अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा ॥६५॥

जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् ।
तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥६६॥

उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति नोच्यते ।
लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥६७॥

यथा स्वप्नमयो जीव जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६८॥

यथा मायामयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६९॥

यथा निर्मितको जीवो जायते म्रियतेऽपि वा ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥७०॥

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥७१॥

चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद् द्वयम् ।
चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम् ॥७२॥

योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ ।
परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः ॥७३॥

अजः कल्पितसंवृत्या परमार्थेन नाप्यजः ।
परतन्त्राभिनिष्पत्त्या संवृत्या जायते तु सः ॥७४॥

अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।
द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥७५॥

यदा न लभते हेतूनुत्तमाधममध्यमान् ।
तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥७६॥

अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाद्वया ।
अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥७७॥

बुद्ध्वानिमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ।
वीतशोकं तथाकाममभयं पदमश्नुते ॥७८॥

अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते ।
वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते ॥७९॥

निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः ।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥८०॥

अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम् ।
सकृद्विभातो ह्येवैष धर्मो धातुस्वभावतः ॥८१॥

सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।
यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥८२॥

अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥८३॥

कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ।
भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥८४॥

प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ।
अनापन्नादिमध्यान्तं किमतः परमीहते ॥८५॥

विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।
दमः प्रकृतिदान्तत्वादेवं विद्वाञ्शमं व्रजेत् ॥८६॥

सवस्तु सोपलम्भञ्च द्वयं लौकिकमिष्यते ।
अवस्तु सोपलम्भञ्च शुद्धं लौकिकमिष्यते ॥८७॥

अवस्त्वनुपलम्भञ्च लोकोत्तरमिति स्मृतम् ।
ज्ञानं ज्ञेयञ्च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥८८॥

ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ।
सर्वज्ञता हि सर्वत्र भवतीह महाधियः ॥८९॥

हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ।
तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥९०॥

प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः ।
विद्यते न हि नानात्वं तेषां क्वचन किञ्चन ॥९१॥

आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः ।
यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥९२॥

आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः ।
सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम् ॥९३॥

वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ।
भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥९४॥

अजे साम्ये तु ये केचिद् भविष्यन्ति सुनिश्चिताः ।
ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥९५॥

अजेष्वजमसङ्क्रान्तं धर्मेषु ज्ञानमिष्यते ।
यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम् ॥९६॥

अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चितः ।
असङ्गता सदा नास्ति किमुतावरणच्युतिः ॥९७॥

अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः ।
आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः ॥९८॥

क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥९९॥

दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम् ।
बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम् ॥१००॥

॥ इति माण्डूक्यकारिकायां अलातशान्तिप्रकरणम् ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# ऐतरेयोपनिषत्कारिका

मनस्तापतमःशान्त्यै यस्य पादनखच्छटा ।
शरच्चन्द्रनिभा भाति तं वन्दे नीलचिन्मणिम् ॥

## शान्तिपाठः

ॐ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्म एधि । वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः । अनेनाधीतेनाऽहो-रात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद् वक्तारमवतु । अवतु माम् अवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

पूर्वं त्वेकैवासीदात्मा सर्वत्र समविस्तरः ।
नैवाऽऽसन्नतिरिक्तानि वस्तुन्यन्यानि कानिचित् ॥१॥

नाऽऽत्मनोऽन्ये पदार्थास्तु जलस्थलनभौकसः ।
सर्वत्र शून्यमेवाऽऽसीद् यत् तदाऽऽसीत् तमोमयम् ॥२॥

'एकोऽह'मिति बुद्ध्याऽऽत्मा 'बहु स्या'मिति चिन्तयन् ।
लोकैषणार्थं जगतः सृष्ट्यर्थमलगद् भृशम् ॥२॥

लोकसृष्टिं प्रकुर्वन् स लोकपालानसर्जयत् ।
स पञ्चभूतैरकरोत् पुरुषाणां च सर्जनम् ॥३॥

स्थानं तेषामिन्द्रियाणि तदधिष्ठातृदेवताः ।
आत्मैवाऽसर्जयत् सर्वं स्थावरान् जङ्गमान् क्रमात् ॥४॥

क्षुधां पिपासामसृजत् स तदाश्रयमप्यहो !
अश्वानां च गवां सृष्टिं व्यदधादक्षमाऽभवत् ॥५॥

ततोऽसृजत् स पुरुषं परमेशेन स्वीकृतम् ।
सर्वे देवाः समागत्य सर्वाङ्गे शक्तिमाददुः ॥६॥

ततः पर्जन्यमसृजत् पर्जन्यादन्नसम्भवः ।
अन्नानि भूतैर्दत्तानि दैवतैः स्वीकृतानि च ॥७॥

प्राविशत् परमात्माऽन्तःशरीरे प्राणिनां स्वयम् ।
जीवभावः समुत्तिष्ठद् ब्रह्मभावे स दृष्टवान् ॥८॥

ब्रह्म प्रसिद्धिमगमदिदन्द्रो नाम सुन्दरम् ।
ज्ञानिनस्तु परोक्षे तमिन्द्रमेव गदन्त्यहो ! ॥९॥

परोक्षप्रियमाणोऽस्ति समस्तो देवतागणः ।
इन्द्रादिदेवताभ्यस्तु प्रत्यक्षं नैव रोचते ॥१०॥

शिष्यः –
श्रुतो मयाऽप्यैतरेये जीवानां जन्मनां क्रमः ।
हे ब्रह्मन् ! विद्यते तत्र जिज्ञासाऽस्ति निवार्यताम् ॥११॥

गुरुः –
नरेण प्रथमं नारीयोनौ वीर्याऽभिसेचनम् ।
कृते गर्भगतो जीवो यथाकालं वसत्यहो ! ॥१२॥

एतत् प्रथमजन्माऽस्ति श्रुत्युक्तं पुरुषस्य हि ।
वर्द्धते शृङ्खलारूपं दृढबन्धनकारकम् ॥१३॥

ततो निष्क्रमणं गर्भाद् द्वितीयं जन्म वर्तते ।
मृतस्याऽस्य पुनर्जन्म तृतीयं जन्म कथ्यते ॥१४॥

एवं जीवः संसरति मृत्योर्जन्म पुनः पुनः ।
संसारात् तरणोपायमात्मज्ञानं यदा भवेत् ॥१५॥

श्रीवामदेवोऽप्यवदद् गर्भात् प्रथमतो मुनिः ।
'अहं सम्पूर्णदेवानां जन्म जानामि गर्भतः' ॥१६॥

आत्मज्ञानं विधायाऽसौ देहं त्यक्त्वा गतो मुनिः ।
कृतकृत्यः स्वयं भूत्वा मुक्तः पारं परं गतः ॥१७॥

शिष्यः –

वामदेवोऽतरत् पश्चात् प्रश्ना बहव उत्थिताः ।
आत्मा कः समुपास्योऽस्ति विद्वांस इत्थमब्रुवन् ॥१८॥

यस्मात् पश्यन्ति शृण्वन्ति जिघ्रन्ति ब्रुवते जनाः ।
रसं जानन्ति मधुराऽमधुरं किं तदित्यहो ! ॥१९॥

प्रश्नानामिह चैतेषां किमुत्तरयति श्रुतिः ।
आज्ञापयतु भो ब्रह्मन् ! शुश्रूषाऽस्ति मयि भृशम् ॥२०॥

गुरुः –

प्रज्ञानमात्मा विज्ञानं मनीषा हृदयं मनः ।
धृतिः संज्ञानमाज्ञानं मतिर्दृष्टिर्युतिर्जनः ॥२१॥

मेधा मतिः स्मृतिः प्राणः क्रतुः कामस्तथा वशः ।
सङ्कल्पमिति नामानि प्रज्ञानस्याऽवधारय ॥२२॥

प्रज्ञानरूपमात्माऽस्ति हीन्द्रो ब्रह्म प्रजापतिः ।
सम्पूर्णा देवताः पृथ्वीवायुराकाशमम्बु च ॥२३॥

तेजश्चैते पञ्चभूताः क्षुद्रजीवाश्च कारणम् ।
अण्डजादिप्राणिनश्च स्थावरा जङ्गमा अपि ॥२४॥

प्रज्ञानेत्रश्च सर्वेऽपि प्रज्ञाने हि प्रतिष्ठिताः ।
लयस्थानं च प्रज्ञाऽस्ति प्रज्ञानं ब्रह्म निश्चितम् ॥२५॥

वामदेवोऽभवद् ब्रह्म मुक्तः संसारतो गतः ।
स्वर्लोकमिन्द्रियातीतं गत्वाऽयममरोऽभवत् ॥२६॥

शिष्यः –
गुरोः सकाशादश्रौषं महावाक्यद्वयं भृशम् ।
इतोऽपि शेषमस्त्येव महावाक्यद्वयं ध्रुवम् ॥२७॥

हे ब्रह्मन् ! तद् द्वयं चाद्य ह्याज्ञापयतु मामिह ।
शुश्रूषा मे बलवती श्रावं श्रावं दिनं गतम् ॥२८॥

गुरुः –
स्वकीयवेदशाखाया महावाक्ये श्रुते सति ।
श्रोतुमावश्यकं चान्यन्न भवेदिति कथ्यते ॥२९॥

अर्थस्य दृढतां भूयादित्यर्थे त्वाऽहमब्रवम् ।
छान्दोग्यस्य महावाक्यं त्वदर्थे नियमं विना ॥३०॥

अन्येऽपि द्वे महावाक्ये भणामि नियमं विना ।
संक्षेपतोऽहं ध्यानस्थः श्रूयतामवधार्यताम् ॥३१॥

'प्रज्ञानं ब्रह्म' बोद्धव्यं सौम्य ! ऋग्वेदवर्णितम् ।
प्रज्ञा ब्रह्मेति बोद्धव्यमस्यार्थोऽप्यवधार्यताम् ॥३२॥

वार्ता विवादो नैवात्र वाक्येऽस्मिन् गुरुशिष्ययोः ।
अनुभूत्यात्मकं यद्वा मन्त्रं वा श्रवणात्मकम् ॥३३॥

अस्पष्टमस्त्येतत् सौम्य ! किमेतदिति न श्रुतम् ।
प्रत्यवायो भवेदत्र तदित्थमिति न ब्रुवे ॥३४॥

एतदर्थमैतरेयं पठोपनिषदं प्रिय !
गुरोः सकाशात् सम्बुध्य त्वमर्थं सुदृढं कुरु ॥३५॥

'अयमात्मा ब्रह्म' वाक्यमथर्वाऽन्तर्गतं स्मर ।
एतन्माण्डूक्यमन्तःस्थं वाक्यं विद्धि [1]रसात्मकम् ॥३६॥

स्थानमस्यापि बोद्धव्यं 'प्रज्ञानं ब्रह्म' वाक्यवत् ।
अतस्त्वं भव सन्नद्धः पठितुं गुरुसन्निधौ ॥३७॥

विनाऽधिकारं को ब्रूयादनर्थमपि संभवेत् ।
अतस्त्वं भव सन्तुष्टोऽहं तु मौनं समाश्रये ॥३८॥

## शान्तिपाठः

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्म एधि । वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः । अनेनाऽधीतेनाऽहोरात्रान् सन्दधाम्यृतं वदिष्यामि । सत्यं वदिष्यामि तन्मामवतु । तद् वक्तारमवतु । अवतु मामवतु वक्तारमवतु वक्तारम् ।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

॥ इति ऐतरेयोपनिषत्कारिका ॥

१. 'रसो वै सः' इति ।

ॐ तत्सद्ब्रह्मणे नमः ।

# तैत्तिरीयोपनिषत्कारिका

सर्वाशाध्वान्तनिर्मुक्तं सर्वाशाभास्करं परम् ।
चिदाकाशावतंसं तं सद्गुरुं प्रणमाम्यहम् ॥

## शान्तिपाठः

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । अवतु वक्तारम् ।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते ।
तेनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥१॥

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥२॥

तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः ।
विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥३॥

शिष्यः –
स्नातको ब्रह्मचारी य आचार्यकुलमाविशन् ।
वेदविद्यां पठन् दान्त उपकुर्वाण उच्यते ॥४॥

एतादृशं छात्रजनं दीक्षान्तदिवसे गुरुः ।
कथं किमुपदेशं तं दिशतीति मया श्रुतम् ।।५।।

मनो मे सुस्थिरं नास्ति श्रोतुमिच्छाऽस्ति हे गुरो !
तच्छ्रुत्वा मानसे शान्तिर्ज्ञानमायातु मे मतौ ।।६।।

गुरुः –

साधु पृष्टस्त्वया प्रश्नः स्वागतं कुर्महे वयम् ।
शिक्षावल्ली परिच्छेदमितः संक्षेपतः शृणु ।।७।।

वसन्तस्ते गुरुकुले छात्रा वेदान्तपारगाः ।
गृहं यान्ति विवाहार्थं स्नातकोपाधिनो यदा ।।८।।

प्रदिशन्त्युपदेशं तान् स्वान् छात्रान् गुरवो जनाः ।
ततो भवन्ति सौम्यास्ते शुद्धाश्च गृहमेधिनः ।।९।।

तदाऽऽचार्यः प्रवदति – सौम्य ! सत्यं सदा वद ।
कुरु धर्मं सदाऽऽचारं स्वाध्यायमपि न त्यज ।।१०।।

गुरवे दक्षिणां दत्वा सन्तानार्थं गृही भव ।
तन्तवस्तव जायन्ते कुरु त्वं वंशरक्षणम् ।।११।।

मातरं पितरं चैवाऽऽचार्यं सम्मानय प्रिय !
देवतुल्या भवन्त्येते सर्वदैवाऽऽदरार्थिनः ।।१२।।

एतादृशा हि बहव उपदेशा दिशन्ति ते ।
आचार्याः स्वान् छात्रगणान् गृहे संप्रेषयन्त्यपि ।।१३।।

शिष्यः –

प्रमुखानुपदेशान् तु भवतोऽद्य मया श्रुतम् ।
अतो भवान् तैत्तिरीयान् ज्ञानांशान् वदतु प्रभो ! ।।१४।।

ब्रह्म सत्यमनन्तं तन् मुक्तो भवति ब्रह्मवित् ।
वसत्येतद् गुहाकाशे ब्रह्म तज्ज्ञातुमर्हीति ॥१५॥

ब्रह्मणो हि जगत्सृष्टिं भवति चलति स्वतः ।
एतज्ज्ञानं बोधते यो निर्भ्रान्तो मुच्यते भृशम् ॥१६॥

शिष्यः –

अन्नस्य महिमा कोऽस्ति कीदृशं श्रुतिसम्मतम् ।
सारांशे श्रोतुमिच्छामि शुश्रूषाऽस्ति मयि प्रभो ! ॥१७॥

अन्नाद् भवन्ति भूतानि जायन्ते चिरजीविनः ।
जीवनान्तेऽपि तेऽन्नेषु जीवा यान्ति मिलन्ति च ॥१८॥

अन्नमेव हि ते वेदा 'अन्नं ब्रह्म' गदन्त्यहो ! ।
उपासनार्थमन्नस्य श्रुतयो निर्दिशन्ति च ॥१९॥

प्रथमोऽस्य शरीरस्य कोशोऽप्यन्नमयः स्मृतः ।
प्राणिनोऽप्यत्र तिष्ठन्ति भोक्तुं कर्मफलानि च ॥२०॥

शिष्यः –

पञ्चकोशेष्वन्यतमः कोशश्चान्नमयोऽस्त्ययम् ।
शरीरेऽन्येऽपि चतुरः शुश्रूषाऽस्ति गुरो मम ॥२१॥

गुरुः –

सर्वे ते प्राणिनः प्राणैः प्राणवन्तः स्वजीवनम् ।
प्राणन्ति कोशद्वितयो विद्धि प्राणमयोऽस्ति हि ॥२२॥

'प्राणो ब्रह्माऽस्ति' गदति श्रुतिरेषा सनातनी ।
अस्यैवोपासनां कर्तुं कुरु त्वं चाऽस्य चिन्तनम् ॥२३॥

मनोमयस्तृतीयोऽस्ति कोशोऽयं ब्रह्म विद्धि तत् ।
उपासनार्थमेनं हि श्रुतिर्निदिशति क्रमात् ॥२४॥

परं मनो न शक्नोति ब्रह्म ध्यानैकचिन्तनम् ।
कर्तुं तत् तत्र मौनेन वाण्या सह निवर्तते ॥२५॥

विज्ञानमयकोशोऽयं समर्थो ज्ञानकर्मणि ।
चतुर्थोऽस्ति विवेकी स्याद् ब्रह्मज्ञानैकगोचरः ॥२६॥

ज्ञानं परमगुह्यं तद् यद् विज्ञानसमन्वितम् ।
एतज्ज्ञात्वा नरः पापान्मुच्यते मर्त्यभोगतः ॥२७॥

आनन्दमयकोशोऽस्ति पञ्चमाऽऽनन्दवर्द्धकः ।
आनन्दार्थं सुखार्थं वा मोदार्थं दुःखिता जनाः ॥२८॥

आनन्दः पुरुषाकारः  शिरोऽस्य प्रियमस्ति चेत् ।
प्रमोदमोदौ द्वौ पक्षौ क्रमशो वामदक्षिणौ ॥२९॥

तस्याऽयमात्माऽस्त्यानन्दः प्रतिष्ठां ज्ञातुमिच्छसि ।
ब्रह्म पुच्छं विजानीयात् खं ब्रह्म श्रुतिदर्शितम् ॥३०॥

पञ्चकोशा इमे ज्ञेयास्त्वमग्रेसर चिन्तय ।
पञ्चकोशे सुविज्ञाते कोऽहं कं ब्रह्म बुध्यते ॥३१॥

वदन्ति ज्ञानिनो ब्रह्म सदन्येऽसद् वदन्त्यहो !
सर्वस्यान्तःस्थिरं ब्रह्म तदेवाऽऽत्मा तदेव सत् ॥३१॥

शिष्यः –

गुरो ! कथं स्वयं ब्रह्म दहरे संवसत्यहो ! ।
सर्वेषां हृदयान्तःस्थं शुश्रूषाऽस्ति मम प्रभो ! ॥३२॥

गुरुः –

परमात्मा पुरा वत्स ! 'एकोऽहमित्यचिन्तयत्' ।
तपः कृत्वा'ऽहं बहु स्या'मित्युक्त्वारचयज्जगत् ॥३३॥

विरचय्य स्वयं सृष्टिं तदन्तःस्थाऽस्ति चेतना ।
मूर्ताऽमूर्तस्वरूपेण सर्वव्याप्ता स्वयं चितिः ॥३४॥

शिष्यः –

कथयन्ति– गुरो ! पूर्वमसदाऽऽसीद् हि सर्वतः ।
जगत् सृष्टमनेनैव स्थूलं सूक्ष्मं चराचरम् ॥३५॥

असतः कीदृशी सृष्टिर्भवितुं शक्नुयादहो !
शून्यवादिमतान्तःस्थः सिद्धान्तोऽयं निगद्यते ॥३६॥

गुरुः –

नैवाऽयं बौद्धसिद्धान्तः सिद्धान्तो वेदविश्रुतः[१] ।
सृष्टिस्वरूपमस्येह परोक्षेणैव वर्णितम् ॥३७॥

अव्याकृतं सृष्टिपूर्वमसदासीदिति श्रुतम् ।
तस्मादव्याकृतादेव सत् सृष्टमिति विश्रुतम् ॥३८॥

नामरूपात्मकं भूत्वा तच्च ब्रह्म विवर्तितम् ।
असत एव सद् ब्रह्म विस्तृतं च विवर्धितम् ॥३९॥

सुकृतं तच्च सद् ब्रह्म स रसो भुवि निश्चितम् ।
[२]इममेव रसं प्राप्य जना आनन्दमाप्नुयुः ॥४०॥

---

१. 'खं ब्रह्म' ईशोपनिषदि ।

२. असद् वा इदमग्र आसीदिति ततो वै सदजायत ।
यद् वै तत् सुकृतं रसो वै सः । स ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति ।
(तै.उ.२।७।११)

तद्भयाद् वाति वातोऽपि सूर्यस्तपति तद्भयात् ।
अग्निरिन्द्रौ प्रचलतो मृत्युर्धावति तद्भयात् ॥४१॥

शिष्यः –

आनन्दो बुध्यते ब्रह्म तं कः कति समाप्नुयात् ?
को जनः कतिमात्रं तं प्राप्याऽऽनन्दं रमेत ह ॥४२॥

गुरुः –

प्रश्नोऽयमतियोग्योऽस्ति स्वागतं तस्य कुर्महे ।
अतीव सूक्ष्मरूपेण सङ्केतं तस्य कुर्महे ॥४३॥

साधुस्वभावसम्पन्नाद् बालकात् क्रमशोऽग्रतः ।
आनन्दो वर्द्धते नित्यं ब्रह्मावधि निरन्तरम् ॥४४॥

लम्बमानाऽस्ति चर्चाऽस्य व्याख्यां नैव करोम्यहम् ।
तैत्तिरीयोपनिषदं सावधानतया पठ ॥४५॥

ज्ञातुमानन्दमात्रां त्वं ध्यायं ध्यायं स्वयं पठ ।
तैत्तिरीयोपनिषदं बृहदारण्यकं पठ ॥४६॥

शिष्यः –

किं फलं प्राप्यते ब्रह्मन् ? आनन्दं प्राप्यते यदि ।
तदा कोऽनुभवो भूयादन्यत् किं वदति श्रुतिः ॥४७॥

गुरुः –

तद् ब्रह्म बोद्धुं कठिनं को ज्ञातुं शक्नुयाज् जनः ।
अशक्यं वर्णितुं वाग्भिर्मनोऽप्राप्य निवर्तते ॥४८॥

यदा प्रबोधति तादृग् ब्रह्माऽऽनन्दं च यो जनः ।
आनन्दं ब्रह्मणो ज्ञाता न बिभेति कुतश्चन ॥४९॥

शिष्यः –

भृगुणा ब्रह्मजिज्ञासा कृता वरुणसन्निधौ ।
तदहं ब्रह्मजिज्ञासां प्रकुर्वे गुरुसन्निधिम् ॥५०॥

गुरुः –

पुत्रो भृगुः स्वयं गत्वा पितुर्वरुणसन्निधिम् ।
विहिता ब्रह्मजिज्ञासा विनयेनोपसत्तिना ॥५१॥

कीदृगासीद् भृगुप्रश्नो वरुणस्य किमुत्तरम् ।
शृणुयामो वयं सौम्य ! प्रश्नोत्तरमुभेऽधुना ॥५२॥

## भृगु-वरुणसंवादः

भृगुः –

भगवन्नहमायातो ब्रह्मज्ञानार्थमुत्सुकः ।
सन्निधिं भवतो ब्रह्मज्ञानं मे दीयतां गुरो ! ॥५३॥

वरुणः –

अन्नं प्राणस्तथा चक्षुर्मनो वागिन्द्रियं क्रमात् ।
ब्रह्मोपलब्धिद्वाराणि भवन्तीत्यवधारय ॥५४॥

यतः सर्वाणि भूतानि जायन्ते मातृगर्भतः ।
ततो जीवन्ति कर्माणि कुर्वते विलयन्ति च ॥५५॥

तदेव त्वं विजानीहि जिज्ञासां तत् कुरुष्व हे !

गुरुः –

शिक्षां वरुणतः प्राप्य तपोऽतप्यत् भृगुः स्वयम् ॥५६॥

वरुणोऽचकथदन्नं प्राणश्चक्षुर्मनो वचः ।
ततो विज्ञानमानन्दं ब्रह्मद्वाराणि सन्ति हि ॥५७॥

एतेषां कुरु जिज्ञासामेतेभ्यो हि चराचरम् ।
जायते कुरुते कर्म जीवति म्रियते ततः ॥५८॥

क्रमादेव भृगुः सर्वमन्नादिब्रह्मरूपकम् ।
ज्ञात्वा तदन्तेऽकुरुत ब्रह्मज्ञानं स्वरूपकम् ॥५९॥

यः कुर्याद् ब्रह्मजिज्ञासां ब्रह्मज्ञानार्थमुत्सुकः ।
अन्नादिसाधनं सत्यं ब्रह्मैवेति विचारयेत् ॥६०॥

तदर्थमेतत् सर्वं हि करणादिकसाधनम् ।
तपसा भवति तेषां संशुद्धिं च प्रशोधनम् ॥६१॥

तैत्तिरीयोपनिषदः सारसंक्षेपतो मया ।
कथितं मननं ध्यानं त्वमेतस्य कुरुष्व हे ! ॥६२॥

श्रुत्वेदं ज्ञायते नैव मननं निदिध्यासनम् ।
करणीयं सदा सौम्य ! ब्रह्माऽभ्यासं स्वचिन्तनम् ॥६३॥

स्वाध्यायं सविधिं कुर्यात् स्वशाखाऽध्ययनं कुरु ।
गुरूपदेशात् सच्छास्त्रं त्वं न विस्मर सौम्य ! हे ॥६४॥

सौम्य ! स्वस्त्यस्तु ते नित्यं ब्रह्मज्ञानं कुरुष्व तत् ।
ब्रह्मैव भूत्वा गच्छ त्वं हित्वा संसारबन्धनम् ॥६५॥

## शान्तिपाठः

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मावतु । तद् वक्तार मवतु । अवतु माम् । अवतु वक्तारम् । अवतु वक्तारम् ॥

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

इति तैत्तिरीयोपनिषत्कारिका ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# श्वेताश्वतरोपनिषत्कारिका

नित्यानन्दं निराधारं निखिलाधारमव्ययम् ।
निगमाद्यगतं नित्यं नीलकण्ठं नमाम्यहम् ॥

शान्तिपाठः

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

शिष्यः –
गुरो ! ब्रह्माऽस्ति कीदृक्षं यज्जगत्कारणं विदुः ।
कुतो जाता वयं ? कस्माज्जीवनं चलतीह नः ॥१॥

सद् ब्रह्म कुत्र वर्वीर्ति ? सुखदुःखे प्रदायते ।
कथमस्मान् प्रेरयति कस्मात् तदनुवर्तते ॥२॥

गुरुः –
ब्रह्मैवाऽस्ति जगद्धेतुर्न तत्कालस्वभावकौ ।
प्राणिनां कर्मवशतः सुखदुःखे समागते ॥३॥

ऋषयो ध्यानमार्गेण ब्रह्म तत्कारणं विदुः ।
चक्रवद् भ्रमतीदं तु ब्रह्मैवाऽस्त्यत्र कारणम् ॥४॥

जलस्रोतः सन्ति पञ्च धाराः पञ्चैव सन्ति ताः ।
तेषां मूलानि पञ्चैव वक्राण्युग्राणि सन्ति च ॥५॥

पञ्च प्राणाः सन्ति तेषु ते तरङ्गायिताः सदा ।
पञ्चैव विषयज्ञानं मनोमूलं निगद्यते ॥६॥

पञ्चाऽऽवर्ताः सन्ति यत्र दुःखौघाः पञ्च दुर्धराः ।
पञ्च पर्वसमायोगा नदी संसारदुस्तरा ॥७॥

शिष्यः –

प्रहेलिकासमा ब्रह्मन् ! बोद्धुं कठिनतां गता ।
कुर्वेऽहं ब्रह्मजिज्ञासामाज्ञापयतु तां प्रभो ! ॥८॥

गुरुः –

भिन्नः स परमात्माऽस्ति जीवाऽऽत्माऽहं ततः पृथक् ।
ब्रह्मचक्रे भ्रमत्येव जीवोऽयं दुस्तरे सदा ॥९॥

यदा जीवो बोधते तदहं ब्रह्मैव नाऽपरः ।
ततः प्रपञ्चविमुखो ब्रह्मैवाऽऽभासते स्वयम् ॥१०॥

परं ब्रह्म परं भाति माया तत्कार्यतः परम् ।
भोक्ताभोग्यौ नियन्ताऽपि परे ब्रह्मणि सन्त्यहो ! ॥११॥

महिम्नो ब्रह्मणो ज्ञात्वा ब्रह्मज्ञानं प्रकुर्वतः ।
मुक्तो भवति दुश्चक्रात् स्वयं ब्रह्माऽभिजायते ॥१२॥

व्यक्ताऽव्यक्तः पराऽऽत्माऽसौ कुर्वन् लोकव्यवस्थितिम् ।
क्षराऽक्षराभ्यां सह स विश्वपालनसक्षमः ॥१३॥

जीवोऽज्ञानात्मको भोक्ता पाशो भवति बन्धनम् ।
सर्वज्ञः परमाऽऽत्मा तु सदा पाशाद् विमुच्यते ॥१४॥

शिष्यः –

मायायां प्रकृतौ चाऽपि जीवात्मनि तथेश्वरे ।
ब्रह्मन् ! मय्यस्ति शुश्रूषा किं किमस्ति विलक्षणम् ॥१५॥

गुरुः –

सर्वः समर्थः सर्वज्ञो ह्यजन्माऽस्तीश्वरो महान् ।
परं जीवोऽसमर्थोऽस्ति सोऽल्पज्ञो जन्मजन्मनि ॥१६॥

अजा प्रकृतिरेकाऽस्ति भोग्यसामग्रिसद्मवत् ।
आत्माऽकर्ताऽप्यनन्तोऽस्ति सैको विश्वाऽऽत्मको महान् ॥१७॥

यदा बुद्ध्येत जीवोऽयं ब्रह्मरूपमिदं तदा ।
कृतकृत्यः स्वयं भूत्वा तरत्येषोऽपि ब्रह्मवित् ॥१८॥

शिष्यः –

ज्ञानं वा ब्रह्मणो ध्यानं किं कृत्वा तत्फलं मिलेत् ?

गुरुः –

ब्रह्मणो ज्ञानमार्गेणाऽविद्यां क्लेशं विनश्यति ॥१९॥

यदा क्लेशो विनश्येत जन्ममृत्यू विलुप्यतः ।
तदाऽऽत्मकामो जीवस्तु कैवल्यपदमाप्नुयात् ॥२०॥

शिष्यः –

ब्रह्म त्रिविधमस्तीति [१]श्रुतिरुल्लिखति प्रभो !
वक्तारो निगदन्त्येतत् सत्यमस्ति न वा किमु ? ॥२१॥

सद् ब्रह्मैव सदा ज्ञेयं नित्यं स्वात्मनि संस्थितम् ।
ज्ञातव्यमन्यन्नास्त्येव चैतद् बोधतु सन्ततम् ॥२२॥

भोक्ता जीवोऽस्ति हे सौम्य ! जगद् भोग्यं हि मायिकम् ।
अमायिकेश्वरः साक्षी स्वयं प्रेरयतीत्यसौ ॥२३॥

यत् पूर्वमुक्तं त्रिविधं भोक्ता भोग्यं पुनर्जगत् ।
तानि त्रिविधरूपाणि ब्रह्मणः कल्पितान्यहो ! ॥२४॥

जगद् विवर्तितं तस्य नानारूपात्मकं विदुः ।
अद्वैतब्रह्मणो रूपं सर्वरूपात्मकं हि तत् ॥२५॥

श्रुतिर्गदति सुस्पष्टं– 'नेह नानाऽस्ति किञ्चन ।'
यैरुक्तं त्रिविधं ब्रह्माऽबोधास्ते विद्धि बालिशाः ॥२६॥

श्रुतमन्योपनिषदि कृतमोङ्कारवर्णनम् ।
अस्मिन्नपि भवेत् तच्च वर्णनीयं ममाऽर्थना ॥२७॥

गुरुः –
काष्ठान्तःस्थो यथैवाऽग्निर्नित्यं वसति सूक्ष्मतः ।
ओङ्कारत्वेन देहान्तः परमात्मा विराजते ॥२८॥

तत्र देहोऽरणिर्ज्ञेयः प्रणवस्तूत्तराऽरणिः ।
ध्यानमन्थनमार्गेण दृश्यतेऽन्तःस्थचिन्मणिः ॥२९॥

यथा तैलं तिलान्तःस्थं नवनीतं पयःस्थितम् ।
सत्येन तपसा चाऽऽत्मा हृदयस्थोऽनुभूयते ॥३०॥

शिष्यः –
ध्यानयोगेन सवितुरनुज्ञां प्राप्य यत्नतः ।
मुमुक्षुः कथमाप्नोति ब्रह्मज्ञानं चिरन्तनम् ॥३१॥

गुरुः –
हिरण्यगर्भोपरि तद् बृहद् ब्रह्म सनातनम् ।
प्रतिदेहं वसत्यन्तर्गूढ आत्मा विराजते ॥३२॥

तदेव ब्रह्माऽस्तीत्येवं बुध्वा जीवोऽमरो भवेत् ।
परोक्षरूपेणैतद्धि श्रुत्यैवोक्तं हि सर्वतः ॥३३॥

शिष्यः –

अनुभूतिः कृता केन ? व्यक्तं तत् साम्प्रतं कथम् ?
शुश्रूषाऽस्त्यधुना ब्रह्मन् ! जिज्ञासा मयि वर्द्धिता ॥३४॥

गुरुः –

ऋषिरासीन्मन्त्रद्रष्टाऽज्ञानातीतस्य ब्रह्मणः ।
ज्ञानं कृत्वा यदुक्तं तच्छ्रोतुं कल्याणकारकम् ॥३५॥

ऋषिः –

अज्ञानातीतमादित्यरूपं [१]ब्रह्म तु वेद्म्यहम् ।
साक्षात्कारे कृते तस्य मन्ये मृत्युं प्रतीर्यते ॥३६॥

इतोऽन्यो मोक्षमार्गो न दृश्यते कोऽपि सुन्दरः ।
परात्परं ब्रह्म भवेत् तं साक्षात्कुरुते यदि ॥३७॥

शिष्यः –

गुरो ! ब्रह्म कथं ज्ञात्वा जीवस्तरति दुस्तरम् ।
सुस्पष्टमाज्ञापयतु छात्रो जिज्ञासतेऽधुना ॥३८॥

गुरुः –

ब्रह्मणोऽन्यन्महद् वस्तु वरीवर्ति न कुत्रचित् ।
अन्यत् सूक्ष्मं महच्चापि विद्यते नैव कुत्रचित् ॥३९॥

अद्वितीयमिदं ब्रह्माऽध्यात्मं सर्वस्य द्योतकम् ।
जगद्व्याप्तं सुस्थिरं तद् सुस्थिरः पादपो यथा ॥४०॥

अङ्गुष्ठमात्रः पुरुष आत्माऽन्तःस्थो विराजते ।
हृदयान्तर्वसत्येषः सर्वज्ञोऽधिपतिः स्वयम् ॥४१॥

---

१. एतज्ज्ञेयं नित्यमेवात्मसंस्थं नाऽतः परं वेदितव्यं हि किञ्चित् । (१।१२)
भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ – श्वेताश्वतरोपनिषद्

मनसा स्वीकृतश्चात्मा दहरान्तर्वसत्यसौ ।
स आत्मा येन बुध्येत सोऽमृतत्वाय कल्पते ॥४२॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतो वृत्वा ह्यत्यतिष्ठद् दशाङ्गुलम् ॥४३॥

यद्वा स नाभेरुपरि हृदयान्तर्दशाङ्गुलम् ।
चिदात्मा दहराकाशे जीवरूपेण राजते ॥४४॥

आत्मनो वर्णनं कृत्वा श्रुतिः सर्वात्मभावतः ।
क्रमशोऽन्तःस्थमात्मानं संस्तुतिं कर्तुमीहते ॥४५॥

अपाणिपाद आत्माऽस्ति समाकर्षति धावति ।
पश्यत्यचक्षुः सर्वत्र श्रोत्रहीनः शृणोत्यपि ॥४६॥

सर्वं वेद्यं स जानीते न परैर्बुध्यते हि सः ।
पुराणपुरुषः [२]पूर्णो कथ्यते स महानिति ॥४७॥

अणोरणीयानात्माऽस्ति महतोऽपि महान् हि सः ।
भोगसङ्कल्पहीनोऽपि दहरान्तर्वसत्यसौ ॥४८॥

धातुः प्रसादाद् दहरे वसन्तं यो जानीते ह्यात्मतत्त्वं महान्तम् ।
तमीश्वरं पश्यति सर्वतः सःशोकैर्विहीनोऽमृतमभ्युपैति ॥४९॥[३]

---

२. वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय ॥
– श्वेताश्वतरोपनिषद् (३।८)

३.(क) सनातनं त्वां पुरुषं पुराविदः । (महाकविर्माघः)
(ख) नमो हिरण्यगर्भाय ब्रह्मणे ब्रह्मरूपिणे ।
अविज्ञातस्वरूपाय कैवल्यायाऽमृताय च ॥
यन्न देवा विजानन्ति मनो यत्राऽपि कुण्ठितम् ।

मन्त्रद्रष्टू ऋषेः साक्षादनुभूतिं प्रदर्शिनीम् ।
श्रुतिः साक्षाद् वर्णयति तस्यर्षेर्भावनां यथा ॥५०॥

अजो नित्यः शाश्वतोऽयं जरामृत्युविवर्जितः ।
आत्मा सनातनोऽस्तीह कथ्यते ब्रह्मवादिभिः ॥५१॥[२]

विभुरात्माऽस्ति सर्वज्ञः सर्वात्मा सर्वसंयुतः ।
ब्रह्मैवेह न तत् कोऽपि जानीते मन्यते मया ॥५२॥

शिष्यः –
यस्मिन् सृष्टिः स्थितिरपि लयो भवति सर्वतः ।
स एवाऽऽत्मा व्यापकोऽस्ति तद् भिन्नं किञ्चिदस्ति नो ॥५३॥

आत्मनो महिमानं मामाज्ञापयतु हे गुरो ! ।
अन्यं विहाय सामान्यं शुश्रूषा मयि वर्द्धिता ॥५४॥

गुरुः –
आत्मैवाऽऽदित्यपवनपावकश्चन्द्रतारकाः ।
पर्जन्याकाशसलिलं चिदात्मा भूः प्रजापतिः ॥५५॥

आत्मा पुं स्त्री कुमारी च कुमारो युवकोऽपि च ।
वर्षिष्ठोऽपि यविष्ठोऽपि शिशुरभ्यागतोऽपि च ॥५६॥

अजा गावो महिष्योऽपि गजवाजिमृगादयः ।
सर्वे कीटपतङ्गाद्या मृगेन्द्राद्या हि जन्तवः ॥५७॥

वनौषधिलतावृक्षाः कुशकाशतृणादयः ।
घृतं तैलं च माषाद्याः यवगोधूमधान्यकाः ॥५८॥

---

न यत्र वाक् प्रसरति नमस्तस्मै चिदात्मने ॥ ....
इत्यादि ब्रह्मणः स्तोत्रं च द्रष्टव्यम् ।
स्कन्दपुराणे काशीखण्डे २।३०–४१

यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमस्ति यत् ।
तत् तत् सर्वं विजानीहि व्याप्तमेव चिदात्मना ॥५९॥

शिष्यः –

प्रकृत्या सह सम्बन्धो जीवस्यापि समुच्यताम् ।
यच्छान्दोग्यश्रुतौ व्यक्तमन्नप्रकृतिवैभवम् ॥६०॥

गुरुः –

अजाऽस्त्येका लोहिता शुक्लवर्णा
क्वचित् कृष्णा शबला सैव दृष्टा ।
तादृक् तादृग् रूपमाधुर्ययुक्ता
दृष्टा स्तस्यास्तनयाऽनेकरूपाः ॥६१॥

नित्यश्चैको ह्यज एको महात्मा
स्वामी तासां नैकरूपामजानाम् ।
भुक्त्वा भोगान् ता जहातीह काले
सोऽयं चान्ते तान् समाहर्तुमीशः ॥६२॥

शिष्यः –

अजाऽजयोर्महत्त्वं किं तेषां भेदोऽस्ति कः पुनः ।
शुक्लकृष्णादयः के के सन्ति ! तान् स्पष्टमुच्यताम् ॥६३॥

गुरुः –

अजा प्रकृतिरेकाऽस्ति ह्यजो जीवात्मकेश्वरः ।
शुक्ललोहितकृष्णास्तु गुणाः सत्त्वरजस्तमाः ॥६४॥

अस्य विस्तरतां बोद्धुं छान्दोग्योपनिषत् समम् ।
शक्यते शाङ्करं भाष्यं सावधानमनाः पठ ॥६५॥

हरिते पादपे द्वौ तौ पक्षिणौ वसतः समौ ।
एकस्तयोरन्नभोक्ताऽनश्नन्नन्यश्चकास्ति ह ॥६६॥

शिष्यः –
बोद्धुं न शक्तोऽस्मि गुरो ! कौ स्यातां तौ हि पक्षिणौ ।
एकश्चकास्ति भोक्ताऽस्ति कथमन्यो न खादति ? ॥६७॥

गुरुः –
जीवेश्वरौ पक्षिणौ द्वौ देहो हरितपादपः ।
ईशः पश्यत्यनश्नन् वै जीवः स्वाद्वत्ति पिप्पलम् ॥६८॥

सदैव मोहितो जीवः सशोको निवसत्यहो !
रममाणः सदाऽऽनन्दो ह्यशोको वसतीश्वरः ॥६९॥

मायां तु प्रकृतिं विद्धि मायिनं तु महेश्वरम् ।
तस्याऽवयवरूपेण वर्वर्तीदं जगत् ततम् ॥७०॥

शिष्यः –
शान्तिं प्राप्नोति साऽऽनन्दं ज्ञानेन परमात्मनः ।
बन्धो नश्यति चेद् ब्रह्मन् ! कथं तत् पुनरुच्यताम् ॥७१॥

गुरुः –
सूक्ष्मातिसूक्ष्मं हृद्यन्तर्गुहाकलिलसंस्थितम् ।
विश्वसृजं परब्रह्माऽनेकरूपेण विस्तृतम् ॥७२॥

संसारभोगदातारं विज्ञाय शिवमीश्वरम् ।
जीवात्मा शान्तिमाप्नोति कर्मबन्धो विनश्यति ॥७३॥

एभिर्ज्ञानेन्द्रियैर्ब्रह्मस्वरूपं नैव बुध्यते ।
हृदयस्थितमात्मानं विज्ञायाऽमृतमश्नुते ॥७४॥

हिरण्यगर्भात् परतः समुत्कृष्टः परात्परः ।
परमात्मा वसत्यत्र विद्याऽविद्यालयोऽस्ति हि ॥७५॥

विद्याऽमृताऽक्षराऽविद्या क्षराऽस्ति क्षणभङ्गुरा ।
एतयोरुभयोर्भिन्नः परमात्मा प्रशासकः ॥७६॥

वेदवेद्यो गुह्य आत्मा सैषोपनिषदि स्थितः ।
तमात्मानं सुरज्येष्ठो विजानीते स्वतः प्रभुम् ॥७७॥

विष्णुरुद्रगणेशास्ते जानते मुनयोऽपि के ।
ये कुर्वते ब्रह्म बोधं तेऽमरा अभवन् स्वतः ॥७८॥

विज्ञानात्मा स नैव स्त्री न पुमान् न नपुंसकः ।
न तु सोपाधिकः शास्ता परमात्मा प्रकाशकः ॥७९॥

यद्यद् विभूतिमत् सत्त्वं तत्राऽध्यासेन संस्थितः ।
तत् तद्रूपो वरीवर्ति विज्ञानात्मा सुरक्षितः ॥८०॥

संसारे संसरत्येष अनाद्यन्तः सनातनः ।
स विश्वसृड् विधाताऽज आस्ते निर्मुक्तबन्धनः ॥८१॥

शिष्यः –
केचिद् भणन्ति कालेन जगत्सृष्टमिदं शनैः ।
परात्मना कथं सृष्टमाज्ञापयतु भो गुरो ! ॥८२॥

गुरुः –
उक्तं कैश्चित् स्वभावेन सृष्टं कालेन तत्परैः ।
ते तु सत्यं न जानन्ति सर्वे मोहसमाकुलाः ॥८३॥

ब्रह्मणो महिमानं तु जानीते ज्ञानवानिह ।
भ्रामयन् सर्वभूतानि लोके ब्रह्म पुरातनम् ॥८४॥

शिष्यः –

हे ब्रह्मन् ! परमेशस्य चिन्तनं कथमुच्यताम् ।
महिमानं स्वरूपञ्च भवता तन्निगद्यताम् ॥८५॥

यद्द्वारा सर्वदा व्याप्तं सर्वमेतच्चराचरम् ।
कालस्यापि स कर्ताऽस्ति ज्ञानस्वरूप ईश्वरः ॥८६॥

निष्पापं गुणसंयुक्तं सर्वज्ञं सर्वकारणम् ।
विवर्तितमिदं ब्रह्म विश्वं यद् गोचरायते ॥८७॥

सौम्य ! सर्वात्मरूपेण निश्चलः सुस्थिरंमना ।
चिन्तनं क्रियतां नित्यमचिन्त्यस्य परात्मनः ॥८८॥

शिष्यः –

अज्ञा विमूढा बद्ध्यन्ते ह्यविद्याकर्मणा ध्रुवम् ।
कथं भवति हे ब्रह्मन् ! वस्तुतः कर्मसाधनम् ॥८९॥

गुरुः –

सत्त्वादिगुणसंयुक्तं कर्म कृत्वा निरन्तरम् ।
फलं तु कर्मणां वत्स ! ब्रह्मणे त्वं समर्पय ॥९०॥

इह लोके कृतं कर्म पूर्वजन्मकृतं तथा ।
नश्यत्येवं मुमुक्षुस्तु मुक्तो भवति बन्धनात् ॥९१॥

शिष्यः –

कथयन्त्यनुभूतिं ते ब्रह्मज्ञाः कथमात्मनः ।
मुक्तिं लभन्ते च कथं ज्ञानिनः कृपयोच्यताम् ॥९२॥

गुरुः –

ईशस्य परमेशोऽस्ति देवानां परमेश्वरः ।
पतीनां पतिरव्यक्तात् परमात्मा परात्परः ॥९३॥

विश्वेशं परमात्मानं स्तवनीयं परात्परम् ।
तमचिन्त्यं हि सद्ब्रह्म जानीमो जगदीश्वरम् ॥९४॥

श्रुतिमन्त्रा वर्णयन्ति – हस्तामलकवत् पुनः ।
मोक्षार्थं परमं ज्ञानं सत्यं साक्षात् क्रियेत चेत् ॥९५॥

सर्वेषां प्राणिनामन्तस्त्वेको देवो वसत्यहो !
स नित्यः सर्वभूतात्मा सर्वात्मा व्यापकेश्वरः ॥९६॥

प्राणिनामन्तरात्माऽपि सोऽधिष्ठाताऽस्ति कर्मणाम् ।
साक्षी द्रष्टाऽस्ति सर्वेषां चिद्विशुद्धः स निर्गुणः ॥९७॥

नित्यं ब्रह्माऽस्ति नित्यानां चेतनानां तु चेतना ।
तदद्वितीयं ब्रह्माऽस्ति स भोक्ता भोगसाधनम् ॥९८॥

तदस्ति देवनाद् देवो ज्ञातव्यो गम्यकारणम् ।
साङ्ख्ययोगे समाख्यातं ज्ञाते बन्धनिवारकम् ॥९९॥

न तत्र तारका भान्ति न सूर्यो न हि चन्द्रमाः ।
सौदामिनी चकास्ते न पावको न प्रकाशते ॥१००॥

प्रकाशिते ब्रह्मणि हि जगत् सर्वं प्रकाशितम् ।
तदाऽऽकाशं चन्द्रसूर्यौ सर्वा सृष्टिर्विभासते ॥१०१॥

दिवि सूर्यसहस्राणामुदयो युगपद् भवेत् ।
तेषां यथा तथा भायाद् भासस्तस्य चिदात्मनः ॥१०२॥

शिष्यः –
श्रुतिर्गदति - देवं तं ज्ञात्वा मुक्तो भवेज्जनः ।
किमन्यत् साधनं नास्ति श्रुतिर्वदति तत् कथम् ? ॥१०३॥

गुरुः –

सर्वेषु भुवनेष्वेको ब्रह्म-हंसो विभासते ।
प्राणिनामन्तरात्मा स जीवरूपेण भासते ॥१०४॥

साक्षात्कारे कृते तस्य मुमुक्षुर्मुच्यते ध्रुवम् ।
नास्ति मोक्षस्य मार्गोऽन्यः श्रुतिः सत्यं प्रभाषते ॥१०५॥

शिष्यः –

तस्यैव शरणं प्राप्ते यदि मोक्षं मिलेत् ततः।
साधनाऽन्यानि हे ब्रह्मन् ! अर्थहीनानि सन्ति किम् ?॥१०६॥

गुरुः –

बाह्यानि साधनाऽन्यानि साक्षाद् बोधोऽस्ति साधनम् ।
तद्बोधाऽवाप्तये सत्यमेकाऽस्ति शरणागतिः ॥१०७॥

श्रुतिर्ददाति सत्यं हि मुमुक्षोः प्रार्थनामिमाम् ।
शरणागतिरेकाऽस्ति साक्षान्मोक्षस्य साधनम् ॥१०८॥

[४]सृष्ट्यादौ प्रथमा सृष्टिः सुरज्येष्ठो निगद्यते ।
तदस्मै ब्रह्मणे येन वेदाः प्रणिहिताः पुनः ॥१०९॥

कुर्याद् बुद्धिप्रकाशं यो तस्य ज्योतिर्मयस्य मे ।
शरणं स्यादितीच्छाऽस्ति मुमुक्षुर्नाऽन्यदिच्छति ॥११०॥

शिष्यः –

ज्ञानस्यैकं महावाक्यं साक्षात् कारणमस्त्यहो !
शास्त्राचार्या गदन्त्येतत् तदन्यद् बाह्यसाधनम् ॥१११॥

---

४. यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ – श्वेताश्वतरोपनिषद् .....

सुस्पष्टमाज्ञापयतु हे ब्रह्मन् ! मयि संशयः ।
समाधानं प्रकुरुतां निःसन्देहो भवाम्यतः ॥११२॥

गुरुः –

रम्यः प्रश्नः कृतः सौम्य ! यावदेतत् प्रदर्शितम् ।
सृष्ट्यादिकर्मणा बुद्धं तटस्थलक्षणान्वितम् ॥११३॥

श्रुतिरित्थं करोत्येवं साक्षात् स्वरूपवर्णनम् ।
ब्रह्मणो लक्षणं त्वेतद् विद्धि स्वरूपलक्षणम् ॥११४॥

तत् सद् ब्रह्म कलाहीनं निष्क्रियं शान्तमव्ययम् ।
अनिन्द्यं निरवद्यं तत् सेतुं नित्याऽमृतात्मकम् ॥११५॥

काष्ठेन्धनानि सर्वाणि ज्वालयित्वा निरन्तरम् ।
भस्मान्तःस्थो वह्निरिव ब्रह्मज्योतिः सनातनम् ॥११६॥

शिष्यः –

ब्रह्मज्ञानं विना ब्रह्मन् ! दुःखं किं न निवर्तते ?
अन्यं साधनमाश्रित्य मुमुक्षुर्मुच्यते न वा ? ॥११७॥

गुरुः –

मानवा वेष्टयिष्यन्ति यदाऽऽकाशं तु चर्मभिः ।
ब्रह्मज्ञानं विना मोक्षं मुमुक्षुर्लभते तदा ॥११८॥

अशक्यत्वादिदं प्रोक्तं किं पृष्टमधुना त्वया ।
मननं क्रियते चेत् तद् ब्रह्म ज्ञातुं हि शक्यते ॥११९॥

शिष्यः –

श्वेताश्वतरविद्यायाः सिद्धान्तेऽपीह साम्प्रतम् ।
अधिकारी भवेत् को हि शुश्रूषाऽस्ति गुरो ! मयि ॥१२०॥

गुरुः –

देवप्रसादात् तपसा ज्ञातं ब्रह्म सनातनम् ।
श्वेताश्वतरशिष्येण सम्प्रदायं विनाऽपि तत् ।।१२१।।

सद्ज्ञानं ब्रह्मतत्त्वं यदृषये हि पुराऽददात् ।
संन्यासिनं चाश्रमिणं यदेतत् क्रमशोऽगमत् ।।१२२।।

शिष्यः –

श्राव्यं कस्मै जनायैतद् वक्तव्यं नैव कीदृशे ।
एतदन्तेऽस्ति जिज्ञासा भो गुरो ! श्रावयस्व माम् ।।१२३।।

गुरुः –

यस्य रागादिना चित्तं मलेनापि प्रदूषितम् ।
अपुत्रायाऽप्यशिष्यायाऽदेयमेतत् सुनिश्चितम् ।।१२४।।

देवान् पितॄन् श्रद्दधते गुरुं भक्त्याऽपि सेवते ।
श्रद्धाभक्तिसमेताय देयं जिज्ञासवे हि तत् ।।१२५।।

एतादृशाय शिष्याय ज्ञानं दद्याद् गुरुः सदा ।
शिष्योऽपि बोद्धुं शक्नोति ब्रह्मज्ञानं सनातनम् ।।१२६।।

## शान्तिपाठः

ॐ सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु, मा विद्विषावहै ।।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

।। इति श्वेताश्वतरोपनिषत्कारिका ।।

ॐ तत्सद्ब्रह्मणे नमः ।

# छान्दोग्योपनिषत्कारिका

सच्चिदानन्दसान्द्राय सर्वातीताय साक्षिणे ।
नमः श्रीदेशिकेन्द्राय शिवायाऽशिवघातिने ॥

शान्तिपाठः

ॐ आप्यायन्तु ममाङ्गानि वाक्प्रणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदाऽऽत्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु । ते मयि सन्तु ।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

शिष्यः –
छान्दोग्यस्याऽपि सारांशं ब्रह्मन् ! वक्तुमिहार्हसि ।
क्रमशस्तद्बुभुत्सा मे भवन्तं प्रसमीक्षते ॥१॥

गुरुः –
प्रारम्भे तु श्रुतिर्वक्ति प्रणवोद्गीथवर्णनम् ।
अस्यैवाऽनेकरूपेण कुरुतेऽपि च शंसनम् ॥२॥

उद्गीथान् विविधानर्थानुषस्तिं च शिलादिकान् ।
श्रुतिः प्रशंसां कुरुतेऽध्यायेऽत्र प्रथमे ततः ॥३॥

द्वितीयेऽपीह सर्वत्र सामोपासनवर्णनम् ।
तृतीये च प्रकुरुते गायत्रीं मधुशंसनम् ॥४॥

श्रुतिः प्रकुरुतेऽत्रैव वर्णनं ब्रह्मभेदयोः ।[1]
ततः प्राणोपासनाया वर्णनं कुरुते श्रुतिः ॥५॥

शाण्डिल्यसंस्तुतां विद्यां यद् ब्रह्मोपासनाक्रमे ।
अध्यात्मे चाऽधिदैवे च वर्णनं कुरुते श्रुतिः ॥६॥

चतुर्थेऽस्तीह संवादो रैक्वजानश्रुतेरपि ।
पुनः संवर्गविद्याया वर्णनं च फलश्रुतेः ॥७॥

सत्यकामाख्यजाबालब्रह्मज्ञस्य कथामनु ।
गार्हपत्याऽग्निविद्याया वर्णनं कुरुते श्रुतिः ॥८॥

अध्याये पञ्चमेऽस्तीह ज्येष्ठश्रेष्ठादिशंसनम् ।
प्राणानामिन्द्रियाणां च वर्णनं कुरुते श्रुतिः ॥९॥

अत्र पञ्चाग्निविद्याया अर्चिरादिकवर्त्मनः ।
पितृयानस्य कुरुते वर्णनं क्रमशः श्रुतिः ॥१०॥

पञ्चाग्निविद्यां प्रपठन् महावाक्यानि संश्रुतौ ।
गृहस्थोऽपि विमुञ्चेत देहपातादनन्तरम् ॥११॥

श्रुते सति महावाक्ये तद्बोधे त्रय आश्रमाः ।
कैवल्ये क्रममुक्तौ वा मुञ्चेरन् संभवः किमु ? ॥१२॥

पञ्चाग्निविद्यां ज्ञात्वैव महावाक्यानि संश्रुतौ ।
गृहस्थास्तु विमुञ्चेरन् क्रममुक्तौ विनिश्चितम् ॥१३॥

छान्दोग्ये पञ्चमाध्यायं यावत् संक्षिप्य सूचितम् ।
इतोऽपि काचिज्जिज्ञासाऽवशेषा यदि पृच्छतु ॥१४॥

---

१. छान्दोग्योपनिषत्कारिका

शिष्यः –

छान्दोग्यस्य महावाक्यं श्रोतुमिच्छाऽस्ति मे गुरो !
तच्छ्रुते दृढता भूयादिति हेतोर्ब्रवीतु माम् ॥१५॥

गुरुः –

संक्षिप्य तदहं वच्मि सावधानमना शृणु ।
श्रुत्वाऽप्येतन्महावाक्यं मननं चिन्तनं कुरु ॥१६॥

ब्रवीमि सामवेदीयं महावाक्यमिदं हि यत् ।
वत्स ! त्वमप्रमादेन सावधानतया शृणु ॥१७॥

शिष्यः –

महावाक्येषु चत्वारि सन्ति मुख्यानि संश्रुतम् ।
आज्ञापयतु मामद्य मनो मे श्रोतुमुत्सुकम् ॥१८॥

मया संक्षिप्तरूपेण श्रुतं यत् प्रथमं गुरो !
अज्ञानान्धतमस्थेन तन्न बुद्धं सुविस्मृतम् ॥१९॥

गुरुः –

मया संक्षिप्तरूपेण यदुक्तं विस्मृतं कथम् ?
प्रमादाऽज्ञानसंमोहाद् विस्मृतं धार्यमेव तत् ॥२०॥

वक्षामि तन्महावाक्यं सामवेदभवं शृणु ।
अप्रमादेन मनसा मननं क्रियतां त्वया ॥२१॥

आसीदुद्दालकसुत आत्मज्ञः सुदृढव्रतः ।
जिज्ञासुः श्वेतकेतुर्यो गृहस्थाश्रममाश्रितः ॥२२॥

कृतोपनयसंस्कारो वेदाध्ययननिर्गतः ।
गृहाद् गतो नातिदूरं गुरोराश्रममाययौ ॥२३॥

स पठन् द्वादशैर्वर्षैः शास्त्रपारङ्गतो बुधः ।
ततः समावर्तितः सः श्वेतकेतुर्गुरोर्गृहात् ।।२४।।

दृष्ट्वा गृहागतं पुत्रं तन्मातापितरौ मुदा ।
सुप्रसन्नौ वर्षयन्तौ सहर्षौ तौ शुभाशिषः ।।२५।।

उद्दालकोऽभवत् खिन्नोऽविनीतं गृहमागतम् ।
अहंमन्यं स्वपुत्रं तं दृष्ट्वाऽनूचानमात्मनः ।।२६।।

आह्वयत् स समीपं तं पृष्टः किमपठो गुरोः ।
अपठं वेदशास्त्राणि पुत्रोऽपि समुदीरयत् ।।२७।।

खिन्नः पिताऽब्रवीत् त्वं तु दृष्टोऽहंयुरहंमनाः ।
आत्मानं पण्डितम्मन्यं लोकाचारं कथं चरेः ।।२८।।

शिष्यः –

स पिता ज्ञानवानासीत् पुत्रमज्ञममंस्त ह ।
शुश्रूषाऽस्ति मयि ब्रह्मन् ! संवादः कीदृशस्तयोः ।।२९।।

गुरुः –

यादृशस्तादृशो वाऽस्तु संवादः पितृपुत्रयोः ।
तमहं साम्प्रतं वक्ष्ये यथार्थं त्वमपि शृणु ।।३०।।

## उद्दालकश्वेतकेतुसंवादः

उद्दालकः –

वेदशास्त्रं त्वयाऽपाठि जिज्ञासामेकलां शृणु ।
यज्ज्ञात्वा बुध्यते सर्वं तत् किं वद ममाऽग्रतः ।।३१।।

श्वेतकेतुः –

तन्न ज्ञातं मया ब्रह्मन् ! तन्नोक्तं गुरुणा मयि ।
आज्ञापयतु मामद्य भवतस्तच्छृणोम्यहम् ।।३२।।

न श्रुतं चिन्तितं नैव न बुद्धं तन्मया गुरो !
श्रूयते तच्च मनसा चिन्त्यते बुद्ध्यते क्रमात् ॥३३॥

आज्ञापयतु तत् तत्त्वं पितर् ! मां कृपयाऽधुना ।
शरणं ते प्रपन्नोऽस्मि सर्वं निगदतु प्रभो ! ॥३४॥

उद्दालकः –

प्रश्नः साधुः कृतः पुत्र ! सावधानतया शृणु ।
श्रूयते यत् त्वया सम्यङ् मननं कुरु हे सुत ? ॥३५॥

घटादिकं वस्तु सर्वं मृत्पिण्डं ज्ञायते यदि ।
सर्वे विकारा ज्ञायन्ते मृदो ज्ञानं हि तात्त्विकम् ॥३६॥

स्वर्णे ज्ञाते त्वया सौम्य ! विकाराः कुण्डलादिकाः ।
सत्यं स्वर्णं सर्वमन्यत् मिथ्या ते कङ्कणादयः ॥३७॥

यदि लौहं त्वया ज्ञातं कुद्दालाः कीलकादयः ।
सर्वे विकारा ज्ञायन्ते लौहं सत्यं तथाऽन्यतः ॥३८॥

श्वेतकेतुः –

एतन्मे गुरुणा नोक्तं स जानाति न वा किमु ?
आज्ञापयतु मामद्य जिज्ञासा मयि वर्द्धिता ॥३९॥

उद्दालकः –

अग्रे सदेव सौम्याऽऽसीदेकं ब्रह्म सनातनम् ।
तत्सदासीदद्वितीयं स्थूलाः सूक्ष्मा न केऽप्यमी ॥४०॥

सृष्ट्यादौ तु न लोकोऽयमासीत् सूर्योऽपि चन्द्रमाः ।
सद् वाऽप्यसच्च नैवाऽऽसीन्मायाऽऽच्छन्नमिदं जगत् ॥४१॥

नाऽऽसीदसच्च सृष्टयादौ नाऽऽसीत् सच्च कुतोऽस्त्वसत् ? ।
असतो न सदुत्पत्तिस्तदा त्वेकं सदेव हि ॥४२॥

त्वयेदमद्वयं वस्तु सज्ज्ञातेऽन्यत्तु बुध्यते ।
अज्ञाते सति सद् वस्तु तदन्यन्मायिकं कथम् ? ॥४३॥

तदन्यन्मायिकं वस्तु बुध्येत सदहोऽप्यसत् ।
मिथ्याज्ञानं भवेच्चेत् तद् वैपरीत्यं भवेत् पुनः ॥४४॥

श्वेतकेतुः –
असतोऽपि च सद् वस्तु कथमुत्पद्यते प्रभो !
कथमप्रत्ययं वस्तु श्रुतिरुद्घोषति प्रभो ! ॥४५॥

असतोऽस्ति सदुत्पत्तिरिति बौद्धमतं श्रुतम् ।
वेदान्ते न श्रुतं चैतद् वस्तुतथ्यं किमस्त्यहो ? ॥४६॥

उद्दालकः –
रम्यः प्रश्नः कृतोऽस्त्येषः सावधानमना शृणुः
एतद् बौद्धमतं नास्ति मतं श्रौतं चिरन्तनम् ॥४७॥

अव्यक्तमसतो नाम व्यक्तं सत् तत् सनातनम् ।
असतोऽभूत् सदुत्पत्तिरिति वेदान्तदर्शनम् ॥४८॥

तैत्तिरीयं च छान्दोग्यमन्योपनिषदामपि ।
अव्यक्तादेव सत् सृष्टं जगदेतच्चराचरम् ॥४९॥

श्वेतकेतुः –
असन्नामकमव्यक्तं सता व्यक्तेन तेन हि ।
कथं विस्तारिता सृष्टिर्जगदेतच्चराचरम् ॥५०॥

सता तेनेक्षितं पूर्वं शून्यमासीदितस्ततः ।
'बहु स्यामहमेकोऽस्मि' सृष्टमेतच्चराऽचरम् ॥५१॥

ततः पश्चात् क्रमेणैव स्थावरा जङ्गमादयः ।
जरायुजाऽण्डजा जाता उद्भिज्जाः स्वेदजा अपि ॥५२॥

प्रथमं तु जडो देहः सता सृष्टस्ततः स्वयम् ।
तदाऽऽधारे प्रविष्टोऽसौ नामरूपेण सञ्चरन् ।।५३।।

क्षयः स्थानं वृद्धिरिति त्रिधारूपेण भास्वता ।
सता प्रविष्टो जीवोऽयं नामरूपमसद् धृतम् ।।५४।।

सृष्टिवर्णनमित्यत्र लम्बमानं भविष्यति ।
श्रुतिं पठित्वा सर्वं त्वं विद्धि सारमहं ब्रुवे ।।५५।।

पञ्चकोशात्मका देहा अन्न–प्राण–मनोमयाः ।
विज्ञानमानन्दमयमवजानातु विस्तरम् ।।५६।।

जाग्रत्स्वप्नसुषुप्त्याऽऽख्यास्तिस्रोऽवस्था भवन्त्यतः ।
साधनानि भवन्त्यत्र कर्मज्ञानेन्द्रियाणि च ।।५७।।

एकं मनः प्रविशति तत्तु जीवसहायकम् ।
अतीव चञ्चलं ह्येतत् सङ्कल्पकविकल्पकम् ।।५८।।

तन्मनो वशमाकृष्य बुद्ध्या संयम्य सुस्थिरः ।
जीवो जयति तां मायां गुरोः शिक्षानुसारतः ।।५९।।

शिष्यः –
बाढमेतद् गुरोरग्रे वेदान्तः श्रूयते मया ।
श्रुतिं पठित्वा तत्पश्चात् कुर्वे मननचिन्तनम् ।।६०।।

'तत् त्वं असि' महावाक्यं छान्दोग्ये वर्णितं श्रुतौ ।
गुरोः संक्षिप्तरूपेण निर्दिष्टं वस्तुतो मयि ।।६४।।

आज्ञापयतु मामद्य महावाक्यं प्रसङ्गतः ।
तदहं श्रवणं कुर्वे दार्ढ्यमायाति संस्मृतौ ।।६५।।

गुरुः –

जिज्ञासा या कृता सौम्य ! शान्तचित्तेन संशृणु ।
महावाक्यं तु दुर्ज्ञेयं पुनर्वक्षामि त्वत्कृते ॥६६॥

व्रतबन्धे कृते सौम्य ! गुरोर्वेदं शृणोति यः ।
सैव योग्यो महावाक्यं श्रोतुं भवति निश्चितम् ॥६७॥

शृणोति यो महावाक्यमपठद् वेदमन्तरा ।
शाखारण्डः पातकी स भवेद् धर्मबहिष्कृतः ॥६८॥

यां वेदशाखां पठति व्रती नियमसंस्थितः ।
तदन्तःस्थं महावाक्यं श्रोतुं तस्याऽधिकारिता ॥६९॥

विषयेऽस्मिन्नहं सौम्य ! वच्म्यहं सप्रसङ्गतः ।
वेदान्तविषयग्रन्थान् पठ त्वं वेत्सि पूर्णतः ॥७०॥

दद्मि धार्मिकनिर्देशमिहाचार्यमतं शृणु ।
महावाक्यं कथं श्रूयात् त्वं विजानीहि साम्प्रतम्[२] ॥७१॥

अधिकारं विना श्रोतुं महावाक्यं भवेन्न हि ।
शाखारण्डो भवेच्छ्रुत्वा सर्वधर्मबहिष्कृतः ॥७२॥

शिष्यः –

मया शुक्लयजुर्वेदः पठितोऽस्ति गुरोः समम् ।
तदन्तःस्थं महावाक्यं श्रोतुमीहे गुरो ! ऽधुना ॥७३॥

सामवेदभवं वाक्यं श्रोतुमिच्छाऽस्ति मे गुरो !
श्रुत्वाऽन्यशाखं वाक्यं तु भवेयं पातकी किमु ? ॥७४॥

---

२. हित्वा स्वस्य द्विजो वेदं यस्त्वधीते परस्य तु ।
शाखारण्डः स विज्ञेयः सर्वधर्मबहिष्कृतः ॥

गुरुः –

श्रव्यं गुरुमुखादेव महावाक्यं विचारय ।
आचार्यवान् सदा भाव्यो जिज्ञासुर्ब्राह्मणो यदि ।।७५।।

छान्दोग्योपनिषद् वक्ति ध्यातव्यो विषयोऽप्ययम् ।
श्रोतव्योऽस्तीह विषये संवादः पितृपुत्रयोः ।।७६।।

श्वेतकेतुः –

ब्रह्मन् ! गुरोर्मुखादेव पृष्ठभूमिर्मया श्रुता ।
श्रोतुं महावाक्यमपि भवच्छरणमागतः ।।७७।।

उद्दालकः –

उपदिष्टं मया यद् यत् स्मर्तव्यं सर्वदैव तत् ।
तत् पृष्ठभूमौ यद् वक्ष्ये बोद्धव्यं क्रमशस्त्वया ।।७८।।

सौम्य ! पूर्वं मया प्रोक्तं सदाऽऽसीदेकमेव हि ।
तदसत् तुल्यमव्यक्तं शुद्धमद्वयमस्ति सत् ।।७९।।

तत् सदस्ति तवाऽऽत्माऽपि त्वं सदाऽऽत्मा परात्परः ।
'तत् त्वम् असि' महावाक्यं श्रुत्वा मनसि भावय ।।८०।।

गुरुः –

दृष्टान्तं बहुशो दत्त्वा प्रोक्तवान् मुनिरारुणिः ।
उपादिशत् स्पष्टमेव सदाऽऽत्मा बुध्यते यथा ।।८१।।

शिष्यः –

उपादिशन्मुनिः किं किं पुनरावृत्तवान् कथम् ?
आवृत्तिर्बहुशः कार्या दुर्बोध्यं तत् सदस्ति किम् ? ।।८२।।

दृष्टान्तास्ते गुरो ! के के ? तदन्ते ज्ञातमस्ति किम् ?
तान् सर्वाञ्छ्रोतुमिच्छामि मनोऽधीरं ममाऽभवत् ।।८३।।

गुरुः –

रम्यः प्रश्नोऽभवद् विद्वन् ? सारांशेन गदामि तान् ।
योग्योऽसि त्वं मया ज्ञातः श्रुत्वैतान् ज्ञानवान् भव ॥८४॥

नवाऽऽवृत्तिं कुरुष्व त्वं सदाऽऽत्माऽसि विचार्य तत् ।
बोद्धुं सरलमस्त्वेतद् दृष्टान्ताँश्च नवानदाम् ॥८५॥

सुषुप्तिं मधुकृद् वृक्षं न्यग्रोधस्य फलं नदीम् ।
मुमूर्षुमपि गान्धारं चौरं सलवणं नवान् ॥८६॥

आवृत्तिर्बहुशः कार्या वेदान्तस्याऽऽगमे त्वया ।
आवृत्तिरसकृत् तत्र ब्रह्मसूत्रेऽधिगम्यते ॥८७॥

वेदान्तोऽस्त्यतिदुर्बोध्यः श्रूयते बहुशो यदि ।
बोद्धुं शक्नोति जिज्ञासुरावर्तने कृते सति ॥८८॥

अत एव नवावृत्त उपदेशे श्रुते सति ।
अन्त्ये स्वयं ज्ञातवान् सः सदाऽऽत्माऽसीति बोधितः ॥८९॥

महावाक्यं 'तत् त्वम् असि' स्वपितुः श्रुतवान् यदा ।
'तत् सदेवाऽहमस्मीति' पुत्रो विज्ञातवान् तदा ॥९०॥

श्रुतिरेवाऽब्रवीदन्त्ये तन्नोक्तं श्वेतकेतुना ।
'असन्नाऽहं सदाऽऽत्माऽस्मि' यद् बुद्धं श्वेतकेतुना ॥९१॥

शिष्यः –

श्रुत्वा चैतन्महावाक्यं श्वेतकेतुः कुतो गतः ?
सन्यासी ब्रह्मचारी वा गृहस्थाश्रममागतः ॥९२॥

गुरुः –

श्रुतिर्न वक्ति सुस्पष्टं तत् प्रकारान्तरं परम् ।
श्वेतकेतुरगात् स्वस्य गृहमेवेति बुध्यते ॥९३॥

शिष्यः –

साक्षादेतन्महावाक्यं मुक्तिहेतुरिति श्रुतिः ।
उद्घोषं कुरुते शास्त्रं प्रमाणयति तत् पुनः ॥९४॥

गुरुणोक्तं श्वेतकेतुस्तज्ज्ञात्वा गृहमागतः ।
प्रमाणमथवा युक्तिर्भवेत् तत् कथ्यतां पुनः ॥९५॥

गुरुः –

उपयुक्तोऽस्ति ते प्रश्नः समीचीनोऽपि मन्यते ।
सर्वेषामत्र जिज्ञासा यज्ज्ञातं तदहं ब्रुवे ॥९६॥

'मया साक्षात्कृतं ब्रह्म' सदाऽऽत्माऽनेन हेतुना ।
'अहं ब्रह्माऽस्मीति' वाक्यं नैवोक्तं श्वेतकेतुना ॥९७॥

छान्दोग्ये बृहदारण्ये तत्प्रमाणं गवेषितम् ।
एतस्मात् कारणात् प्राप्तं श्वेतकेतुप्रसङ्गतः ॥९८॥

वक्ष्यामि त्वामहं वत्स ! सावधानमना शृणु ।
एष पञ्चाऽग्निविद्यायाः प्रसङ्गोऽस्ति जुगोपितः ॥९९॥

मोक्षहेतुर्महावाक्यमस्ति त्र्याश्रमिणां कृते ।
परं पञ्चाग्निविद्या तु गृहीणां मोक्षसाधनम् ॥१००॥

श्वेतकेतुर्गृहस्थोऽस्ति नैतस्मिन् सुस्थिरोऽभवत् ।
सोऽगात् पञ्चाग्निविद्यार्थं प्रवाहणसमीपतः ॥१०१॥

शिष्यः –

महावाक्यमश्रुत्वाऽपि गृहस्थः किं विमुच्यते ।
गुरो ! पञ्चाग्निविद्यैव पर्याप्ता किं भवेदिह ॥१०२॥

गृहस्थाश्रमिणामेतावुपायौ मोक्षसाधने ।
विकल्पो न भवेदत्राऽनिवार्यावुभयौ स्मृतौ ॥१०३॥

द्वावुपायौ गुरोर्ज्ञेयौ श्रोतव्यावश्यमेव तौ ।
गृहस्थो मुक्तिकामी चेद् बोद्धव्यावुभयौ भृशम् ॥१०४॥

शिष्यः –

‘तत् त्वम् असि’ महावाक्यं तात्पर्यं वक्तु साम्प्रतम् ।
गुरो ! सुस्पष्टमस्याऽद्य शुश्रूषा मे बलीयसी ॥१०५॥

मया पञ्चाग्निविद्याया नामाऽप्यद्यैव संश्रुतम् ।
अधिकारी भवेयं चेन्मां तां शिक्षयतु प्रभो ! ॥१०६॥

गुरुः –

महावाक्यार्थतात्पर्यं वच्म्यहं शास्त्रसम्मतम् ।
पूर्वं पञ्चाग्निविद्यां च वच्म्यहं त्वां प्रसङ्गतः ॥१०७॥

‘तत्’ सदात्माऽस्ति ‘त्वम्’ जीवश्चित्प्रतीकपदं ‘त्वसि’ ।
चित् प्रातिपदिकार्थो हि वसत्यन्तर्गतः स्वयम् ॥१०८॥

शुद्धसत्त्वविशिष्टाऽऽत्मा विशेषणनिवर्तितः ।
अन्तर्गतो जीवभावे चितिरूपेण तिष्ठते ॥१०९॥

जीवात्मनोर्भेदको यो विशेषोऽस्ति विशेषणः ।
जीवात्मनोरैक्यबोधो भवेद् भेदकभेदने ॥११०॥

एतज्ज्ञानं स्थिरीभावे जीवमोक्षस्य सम्भवः ।
तत्त्वं पदार्थबोधोऽपि दार्ढ्यमेति विभावय ॥१११॥

सामवेदमहावाक्यसारमेतद् विजानताम् ।
विशेषं ज्ञातुमिच्छा चेच्छान्दोग्योपनिषत् पठ ॥११२॥

शिष्यः –

तत् प्रातिपदिकार्थं किं बोधे कठिनतामभूत् ।
एतदर्थमविज्ञाय महावाक्यं न बुध्यते ॥११३॥

एतस्मात् कारणाद् ब्रह्मन् ? शुश्रूषुरिदमस्म्यहम् ।
समुत्सुकोऽस्मि जिज्ञासुर्जिज्ञासां मम शाम्यताम् ॥११४॥

गुरुः –
आस्ते यद् वस्तु यद्वाक्ये सर्वदा यदुपस्थितम् ।
तत् [३]प्रातिपदिकार्थं स्यात् तत् त्वं विद्धि सुनिश्चितम् ॥११५॥

एतदर्थं 'पराविद्याग्रन्थं' पठ यथार्थतः ।
सम्यग् वेत्सि पराविद्यां ज्ञानार्थं दृढतां धर ॥११६॥

## रैक्व-जानश्रुतिसंवादः
## संवर्गविद्या

शिष्यः –
श्रुता पञ्चाग्निविद्या तु जिज्ञासा मम वर्द्धिता ।
संवर्गविद्या किमिति गुरो ! बोधतु मामितः ॥११७॥

का सा संवर्गविद्याऽस्ति कं को गुरुरपाठयत् ?
केन संप्रेरिता साऽऽयात् तां श्रुत्वा किं भवेदिह ? ॥११८॥

गुरुः –
जानश्रुतिर्नाम राजा पुराकल्पेऽभवच्छृणु ।
श्रद्धापूर्वकमेवाऽन्नप्रदाता जनवल्लभः ॥११९॥

हंसश्रेणी समायाता प्रासादोपरि चैकदा ।
राज्ञः प्रशंसामकरोद् रैक्वस्याऽपि तथाऽकरोत् ॥१२०॥

राजा प्रसन्नमभवद् हंसवार्तां श्रुते सति ।
दूतान् सम्प्रेषयच्चाऽपि कोऽयं रैक्वस्यान्वेषणायसः ॥१२१॥

---

३. नियतोपस्थितः प्रातिपदिकार्थः ।

आसीद् रैक्वस्तु शकटी शकटान्तःस्थितोऽभवत् ।
सामान्यो दुर्बलोऽस्वच्छः प्रसादमनसः परम् ॥१२२॥

दूतैर्गवेषितो रैक्वो राजानं तैर्निवेदितः ।
राजाऽपि रैक्वममिलत् सोपहारः समागतः ॥१२३॥

उपहारं न जग्राह राज्ञो रैक्वश्च कञ्चन ।
तत्पश्चाद् राजकन्याभिः सार्धं सर्वमगृह्यत ॥१२४॥

रैक्वोपसत्तिं कुर्वन् स राजा शरणमागतः ।
ततः संवर्गविद्याया जिज्ञासां प्राकरोन्नृपः ॥१२५॥

रैक्वः –

संवर्गविद्यां जानीयाद् राजन् ! वायुरयं भवान् ।
अग्निः शाम्यति चेद् वायौ गत्वा मिलति सन्ततम् ॥१२६॥

वायौ गत्वा मिलत्येवं तथा सूर्योऽस्तमेति चेत् ।
चन्द्रोऽपि वायौ मिलति निश्चितञ्चास्तमेति चेत् ॥१२७॥

अध्यात्मदृष्ट्या प्राणोऽपि विद्धि संवर्ग एव हि ।
वायुरेव विजानीयात् प्राणाः पञ्च भवानिह ॥१२८॥

वाङ्मनश्चित्तसङ्कल्पतेजोध्यानबलादयः ।
सर्वे सुषुप्तौ प्राणेषु मिलन्येतेऽपि निश्चितम् ॥१२९॥

प्राणो वायुश्च संवर्गविद्यां विद्धि त्वमद्य भो !
इन्द्रियेषु प्राण एको देवेषु पवनोऽपि च ॥१३०॥

गुरुः –

अन्त्ये रैक्वः स्तुतिं कुर्वन् संवर्गस्याऽप्यनेकधा ।
संवर्गविद्यामसकृदुपसंहृतवान् भृशम् ॥१३१॥

शिष्यः –

श्रुतं पुरा सत्यकाम आसीज्जबालबालकः ।
बालकोऽपि कथं तेन ज्ञानमार्गः समाश्रितः ॥१३२॥

गुरुः –

एकामाख्यायिकां सौम्य ! शृणु त्वं कथयाम्यहम् ।
ब्रह्मोपासनकार्यस्य तपः श्रद्धाऽङ्गसाधनम् ॥१३३॥

अग्रे कृत्वेदमुद्देश्यं स्पष्टं निगदति श्रुतिः ।
श्रद्धाविश्वासरूपेण श्रोतव्यं साधनेन वै ॥१३४॥

कदाचित् सत्यकामोऽयं मातरं निकषाऽवदत् ।
'मातः पठितुकामोऽहं ब्रह्मचर्यव्रतं चरन्' ॥१३५॥

आचार्यकुलमाश्रित्य छात्रः पठितुमागते ।
कुलगोत्रे निवेद्ये द्वे पृच्छे सति गुरो यदा ॥१३६॥

मातर्जिज्ञासुरस्म्यद्य नाम गोत्रं कुलं मम ।
पितुर्नामाऽपि मां ब्रूहि किमर्थं क्वाऽधुना वसेत् ? ॥१३७॥

जबालाः –

स्थितावन्यगृहे सेवां कुर्वन्तौ ते पिता मृतः ।
नामगोत्रादिकं स्प्रष्टुं विस्मृता किमहं ब्रुवे ॥१३८॥

'वत्स ! त्वं सत्यकामोऽसि जबाला नामिकाऽस्म्यहम् ।
एतन्नामद्वयं ब्रूहि गुरुं ते किमतो ब्रुवे ॥१३९॥

गुरुः –

पठितुं सत्यकामोऽगादाचार्यकुलमुत्तमम् ।
गुरुरासीत् सदाचारी हारिद्रुमतगौतमः ॥१४०॥

गुरूपसत्तिं कुर्वाणो विनम्रो मधुरं ब्रुवन् ।
'अनुत्तमाऽऽचार्यकुलेऽध्ययनार्थं समागतः' ॥१४१॥

नामगोत्रादिकं किन्ते पृष्टवान् गौतमो गुरुः ।
मात्रा यदुक्तं तत्सर्वं सत्यकामोऽनिवेदयत् ॥१४२॥

प्रसन्नो गौतमस्तुष्टो व्रतबन्धेन संस्कृतम् ।
गोचारणार्थं तं शिष्यं नियुक्तमकरोद् गुरुः ॥१४३॥

आसीच्चतुःशती गावो वने ता वर्द्धिते सति ।
यावत् सहस्रं स्युस्तास्त्वमानयष्व गृहं प्रति ॥१४४॥

इत्युक्ते तं गुरुर्वाक्ये वने गोपालकोऽभवत् ।
श्रद्धातपोभ्यां सत्योऽपि गोसेवामकरोद् वने ॥१४५॥

एकेन वृषभेणोक्तः सत्यकाम ! करोषि किम् ?
गवां सहस्रमभवदाचार्यगृहमाप्नुहि ॥१४६॥

ब्रह्मणः प्रथमः पादश्चतुर्दिग् य इहोच्यते ।
प्रकाशवान् कलायुक्तो विद्यते स चतुष्कलः ॥१४७॥

विज्ञाय य इमं पादं ब्रह्मोपासनमाचरेत् ।
स्वयं प्रकाशितो भूत्वा प्रकाशितजगज्जयेत् ॥१४८॥

गुरुः –
अग्निर्द्वितीयः पादोऽस्ति वृषभः पुनरब्रवीत् ।
द्वितीये दिवसे यातो वासे वह्निरथाऽब्रवीत् ॥१४९॥

अग्निः –
पृथिव्याद्याः कलाः सन्ति चतस्रो ब्रह्मणोऽपि च ।
चतुष्कलाभिः सम्पन्नोऽनन्तो ब्रह्मेति बुध्यताम् ॥१५०॥

ज्ञात्वैवं कुरुते यो हि ब्रह्मणः सदुपासनम् ।
सोऽनन्तवान् स्वयं भूयाद् यः कुर्यात् तदुपासनम् ॥१५१॥

गुरुः –

'ब्रह्मणस्तृतयं पादं हंसो वक्तीति' चिन्तयन् ।
आह्वानमकरोदग्निर्हंसः प्रत्यक्षमागतः ॥१५२॥

हंसः –

ब्रह्मणः पादमध्येषु पावकाद्याश्चतुष्कलाः ।
ज्योतिष्मद् गुणसंयुक्तं शुद्धं ब्रह्माऽस्ति निर्मलम् ॥१५३॥

ज्योतिष्मद् ब्रह्मणो यो हि कुरुते नित्यचिन्तनम् ।
सोज्ज्वलो ज्योतियुक्तः सन् ज्योतिष्मल्लोकमभ्युपैत् ॥१५४॥

गुरुः –

तुरीयं ब्रह्मणः पादं मद्गुर्वक्तीति चिन्तयन् ।
हंसोऽगात् सत्यकामोऽपि मुखपूर्वोऽवसत् क्षणम् ॥१५५॥

मद्गुः –

मद्गुरागत्य चत्वारो ब्रह्मपादाः प्रकीर्तिताः ।
प्राणाद्या आयतं ब्रह्म सौम्य ! जानीहि निश्चितम् ॥१५६॥

यो भक्तिं कुरुते ब्रह्माऽऽयतनं बोधते स्वयम् ।
सोऽयमायतनो भूयाल्लोकं चापि जयेदपि ॥१५७॥

निवर्तितः सत्यकाम आचार्यकुलमागतः ।
तत्राऽप्याचार्यशिष्येषु संवादः समजायत ॥१५८॥

आचार्यः –

ब्रह्मवेत्तासमो दृष्टः सत्यकाम ! कथं वद ।
केन त्वमुपदिष्टोऽसि सर्वं विस्तरशो वद ॥१५९॥

सत्यकामः –

सत्यमेवाऽस्ति भगव ! वेदान्तो भाग्यतः श्रुतः ।
उपदेशमकुर्वंस्ते देवा मां मानवेतराः ॥१६०॥

वेदान्तो निश्चितः श्रव्यः शिष्येणाऽऽचार्यतो वरः ।
अन्यथा न भवेद् ज्ञानमन्याचार्यमतं त्विदम् ॥१६१॥

गुरुः –

तत्र प्रसन्न आचार्यः सत्यकाममुपादिशत् ।
पूर्ववत् सत्यकामोऽपि वेदान्तमशृणोत् पुनः ॥१६२॥

## प्रजापतेरुपदेशः

शिष्यः –

सम्प्रदायः कोऽस्ति गुरो ! लक्षणं किं चिदात्मनः ।
किं विद्यादानयोर्ब्रह्मन्नाज्ञापयतु लक्षणम् ॥१६३॥

गुरुः –

एतदर्थं श्रुतिरपि गदत्याख्यायिकामिह ।
विद्यादानस्य माहात्म्यं तस्यामिन्द्रविरोचनौ ॥ १६४॥

द्वावुभौ ब्रह्मणः पार्श्वं गताविन्द्रविरोचनौ ।
पुरा विनम्रौ चरणे जिज्ञासां स्वां निवेदितौ ॥१६५॥

ब्रह्मन्नाज्ञापयत्वद्य जिज्ञासास्त्युभयोरिह ।
नाम रूपं किमस्त्यस्य लक्षणं किं चिदात्मनः ॥१६६॥

संवादं शृणु हे सौम्य ! ब्रह्माविरोचनादिनाम् ।
संक्षेपेण प्रवक्ष्यामि श्रुत्वा चैवाऽवधार्यताम् ॥१६७॥

प्रजापतिः – (ब्रह्मा)
जिज्ञासा शोभनाऽतीव शृणुतं शान्तमानसौ ।
युवामुभौ गदिष्यामि लक्षणं किं चिदात्मनः ।।१६८।।

'पापशून्यो जराहीनो मृत्योः परतरः सदा ।
क्षुत्पिपासाशोकहीनश्चिदाऽऽत्माऽस्ति परात्परः ।।१६९।।

स सदा सत्यसङ्कल्पः सत्यकामादिलक्षितः ।
चिदात्मनो लक्षणानि ज्ञात्वा तं बोधतं युवाम् ।।१७०।।

यः शृणोति गुरोरेनं चिन्तनं कुरुते पुनः ।
चिदात्मानं सिद्ध्यति सः कामनां च पिपर्त्यहो ! ।।१७१।।

गुरुः –
प्रजापतेरिदं वाक्यं श्रुत्वा शक्रविरोचनौ ।
समित्पाणी उभौ शिष्यौ भूत्वा जिज्ञासयाऽऽगतौ ।।१७२।।

पूरयन्ति मनःकामा आत्मज्ञाने कृते सति ।
विचार्यैतच्चरणयोर्विनतौ तौ समागतौ ।।१७३।।

द्वात्रिंशद् वर्षपर्यन्तं ब्रह्मचर्येण संस्थितौ ।
प्रजापतेः समीपं तौ ततोऽपृच्छत् प्रजापतिः ।।१७४।।

## इन्द्रविरोचनौ

पापशून्यं जराहीनमात्मज्ञानं कृते सति ।
पूरयन्ति मनःकामानेतदर्थं समागतौ ।।१७५।।

प्रजापतिः –
चक्षुषोः पुरुषं पश्य स आत्मैवेति संस्मर ।
जले च मुकुरे पश्य स आत्मैवेति संस्मर ।।१७६।।

गुरुः –

सुनिर्मले जले दृष्टो द्वाभ्यामात्मा सचेतनः ।
आनखाग्रः स्वानुरूपः स आत्मा प्रतिबिम्बितः ।।१७७।।

ब्रह्मणा पुनरप्युक्तं वस्त्रालङ्कारसज्जितम् ।
निर्मले जलपात्रे त्वं स्वरूपं पश्य निश्चितम् ।।१७८।।

वस्त्रालङ्कारसंयुक्तो देह आत्मेति संस्मृतौ ।
स्वधामनि परावृत्तौ तदा शक्रविरोचनौ ।।१७९।।

आत्मज्ञानं विना यान्तौ तदा शक्रविरोचनौ ।
अज्ञानेन परावृत्तौ विधात्रा तौ विलोकितौ ।।१८०।।

विरोचनो गतो दैत्यसमाजे त्विदमब्रवीत् ।
देह एवाऽयमात्माऽस्ति जीवभूतः सनातनः ।।१८१।।

एतस्मात् कारणाद् दैत्या 'देह आत्मेति' चिन्तनम् ।
कुर्वन्तो मृतदेहाँस्ते पूजयन्ति निरन्तरम् ।।१८२।।

इतः शक्रोऽपि निर्यातः स्वधाम न गतः पथि ।
देहो मिथ्येति संचिन्त्य नाऽयमात्मेति बुद्धवान् ।।१८३।।

पुनः शक्रः समित्पाणिः सुरज्येष्ठं समागतः ।
आत्मोपदेशं कुरुतां भवान् मां पुनरागतः ।।१८४।।

ब्रह्माऽपि यद्यवत्स्यस्त्वं षोडशाऽब्दद्वयं वस ।
इत्युक्त्वा शक्रमात्मानमुपदेष्टुमरप्स्यत ।।१८५।।

प्रजापतिः –

स्वप्ने यद् दृश्यते चित्रं तदेवाऽऽत्मा परात्परः ।
तदेवाऽस्त्यभयं ब्रह्म विज्वरं चामृतं हि तत् ।।१८६।।

श्रुत्वोपदेशमिन्द्रोऽपि ज्ञानं प्राप्य निवर्तितः ।
मार्गे सशङ्कितः सोऽपि शान्तो भूत्वाऽत्र चिन्तितः ॥१८७॥

भवत्यन्धं शरीरं चेद् द्रष्टाऽनन्धो भवत्यहो !
श्रान्तमस्ति शरीरं चेद् द्रष्टाऽश्रान्तो भवत्यहो ! ॥१८८॥

स्वप्ने परन्तु जीवोऽयं रोदिति क्रोशति स्वयम् ।
जीवो न मुच्यते चेदं ज्ञात्वा सर्वं निरर्थकम् ॥१८९॥

पुनर्निवर्तितः शक्रः समित्पाणिः प्रजापतेः ।
समीपमागतो ज्ञातुमात्मानं विनयोऽब्रवीत् ॥१९०॥

इन्द्रः –

छायात्मानं हि स्वप्नात्मा मत्वाऽऽत्मानं भवेत् किमु ?
अनेन न मिलेन्मुक्तिमेवं ज्ञात्वा निरर्थकम् ॥१९१॥

ब्रह्मन्नेवमहं ज्ञात्वा मार्गादेव निवर्तितः ।
आत्मोपदेशं कुरुतां शुश्रूषाऽस्ति ममाऽधिका ॥१९२॥

प्रजापतिः –

बाढमुक्तं त्वया शक्र ! मया त्वमुपदिष्यसे ।
ब्रह्मचारी व्रती भूत्वा षोडशाऽब्दद्वयं वस ॥१९३॥

दृश्यदर्शनशून्योऽपि यत्राऽऽनन्दं मिलत्यहो !
सुषुप्तिकालिकश्चात्मा त्वमेनं ज्ञातुमर्हसि ॥१९४॥

अभयं चामृतं सैष सैष आत्मा परात्परः ।
'अहं ब्रह्माऽस्मीति' बुद्ध्या त्वमेनं ज्ञातुमर्हसि ॥१९५॥

गुरुः –

उपदेशं गृहीत्वेन्द्रोऽगमद् ब्रह्म विचिन्तयन् ।
सुषुप्तिकालिकश्चात्मा कथं ब्रह्माऽर्हितं न तत् ॥१९६॥

तमोमये सुषुप्तौ तु ज्ञानशून्यमचेतनम् ।
न जानात्यन्यमात्मानं कथं ब्रह्माऽर्हितं न तत् ॥१९७॥

एनं ज्ञात्वा निष्फलं स्यादिति मत्वा निवर्तितः ।
समित्पाणिः पुनः शक्रो ब्रह्मणः शरणागतः ॥१९८॥

प्रजापति –

उपदेशं करिष्यामि बाढमेवं त्वमागतः ।
ब्रह्मचारी व्रती भूत्वा पञ्चाब्दान् सुस्थिरो वस ॥१९९॥

मर्त्यं शरीरमस्माकं मृत्युग्रस्तं निरन्तरम् ।
अक्षरस्याऽऽत्मनो देहोऽधिष्ठानमशरीरिणः ॥२००॥

यः शारीरकजीवात्मा तस्य स्यातां प्रियाऽप्रियौ ।
यावत् शरीरमध्यास्ते तावत् स्यातां प्रियाऽप्रियौ ॥२०१॥

अशरीरी यदाऽऽत्मा स्याद् गतौ तस्य प्रियाऽप्रियौ ।
योऽशरीरी स आत्माऽस्ति परब्रह्म परात्परम् ॥२०२॥

मेघो मेघनिनादश्च तडिद्वायुरदेहवान् ।
आयाताऽऽकाशमार्गात्ते गताः सूर्यं मिलन्त्यहो[४] ! ॥२०३॥

जीवाऽऽत्माऽसौ तथा कृत्वा यदा देहात्समुद्गतः ।
सत्स्वरूपं परं ज्योतिः सूर्यं मिलति वायुवत् ॥२०४॥

यावन्ति भोग्यवस्तूनि ब्रह्मलोके मिलन्त्यहो !
परमात्मा ब्रह्मलोके सदा तैः सह मोदते ॥२०५॥

उपासते सदा देवाः सदाऽऽत्मानं निरन्तरम् ।
सर्वलोके रमन्ते ते सर्वान् भोगाँश्च भुञ्जते ॥२०६॥

---

४. तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।

ये जानन्ति सदाऽऽत्मानं शास्त्राचार्यानुसारतः ।
ये साक्षात् कुर्वते तेषां लोकभोगान् मिलन्त्यहो ! ॥२०७॥

यः साक्षात्कुरुते ब्रह्म ब्रह्मलोकं स आप्नुयात् ।
स त्यजेत् पापपुण्यानि पुराणान्यश्वलोमवत् ॥२०८॥

तमोमयाद् राहुमुखान्निर्गतश्चन्द्रमा यथा ।
मृतोऽपि कृतकृत्यः सन् ब्रह्मणो लोकमाप्नुयात् ॥२०९॥

आकाशनाम्ना ख्यातं तन्नामरूपप्रकाशकम् ।
ब्रह्मणो रूपमात्माऽस्ति तत् सदैवाऽमृतायते ॥२१०॥

शिष्यः –

आत्मज्ञानस्य माहात्म्यं श्रोतुमिच्छा परम्पराम् ।
नियमं च फलं चास्य श्रोतुमिच्छामि भो गुरो ! ॥२११॥

गुरुः –

आत्मज्ञानमिदं ब्रह्माऽदात् प्रजापतये पुरा ।
ततः प्रजापतिः प्रादान्मनवे चेदमुत्तमम् ॥२१२॥

ततः स्वाभ्यः प्रजाभ्योऽदादात्मज्ञानं क्रमान्मनुः ।
इदं सनियमं श्रोतुं यान्ति ता गुरुसन्निधिम् ॥२१३॥

सविधिं वेदवेदाङ्गमाचार्यकुलमागताः ।
पठित्वा स्नातका भूत्वा छात्राः स्वगृहमागताः ॥२१४॥

सद्वृत्तां सत्कुलां कन्यामुद्वाह्य परिवारवान् ।
पवित्रस्थानमासाद्य स्वाध्यायं कुरुते गृहे ॥२१५॥

चित्तवृत्तिं निरुध्याऽऽस्ते कुर्वन्निन्द्रियनिग्रहम् ।
चतुःसाधनसम्पन्न आत्मज्ञानैकनिश्चयः ॥२१६॥

वेदं स्वशाखामभ्यस्य स्वगुरोर्निकटस्थितः ।
आत्मज्ञानैकमभ्यासं मननं कृतनिश्चयः ॥२१७॥

प्रारब्धलब्धमायुष्यं सञ्जीवन् स निरामयः ।
जीवनान्ते विदेहः सन् ब्रह्मलोकं प्रयाति च ॥२१८॥

यदा मुक्तो भवेद् ब्रह्मा तदा सोऽपि विमुच्यते ।
ब्रह्मैवाऽऽसीत् पुनः सोऽयं ब्रह्माणमधिगच्छति ॥२१९॥

यदा मुक्तो भवेद् ज्ञानी कैवल्यं मुक्तिमाप्नुयात् ।
'पुनर्नाऽऽवर्तते सोऽय'मिति वेदान्तडिण्डिमः[५] ॥२२०॥

## (द इत्युपदेशः)

शिष्यः –
देवेभ्योऽपि मनुष्येभ्यो दानवेभ्यः प्रजापतिः ।
'द' इत्येकाक्षरं प्रादात् किं गुरो ! तन्मया श्रुतम् ॥२२१॥

गुरुः –
पुरा देवा मनुष्याश्च दैत्या अपि प्रजापतेः ।
समक्षं गतवन्तस्ते तदुपसत्तिपूर्वकम् ॥२२२॥

ब्रह्मचर्यव्रताः सेवां कृतवन्तः पितुः समे ।
विनीता उपदेशार्थं प्रार्थयन्तोऽवसन् ततः ॥२२३॥

देवाः सर्वेऽवदन्–ब्रह्मन् ! उपदेशं कुरुष्व नः ।
'द' इत्येकाक्षरं प्रादात् तेभ्यः शिक्षां प्रजापतिः ॥२२४॥

५. न च स पुनरावर्तते । (छा.८।१५।१)

प्रजापतिः –
उपदिष्टा मया देवाः सर्वे यूयं दकारतः ।
यद् बुद्धं तन्मयि ब्रूत भवद्भ्यः स्यात् प्रसन्नता ॥२२५॥

देवताः –
बुद्धो ब्रह्मन् ! दकारार्थौ 'दमनं' क्रियतामिति ।
प्रजापतिः –
बाढमेवं प्रबुद्धं तद् दकारार्थः स एव हि ॥२२६॥

गुरुः –
पुनः प्रजापतेरग्रे विनता अगमन्नराः ।
उपदेशं प्रकुरुतां तातस्ते चरणागताः ॥२२७॥

पुनः प्रजापतिस्तेभ्यो दकारमुपदिष्टवान् ।
ब्रूत यूयं किमर्थोऽस्य यज्ज्ञातो मां निवेद्यताम् ॥२२८॥

मनुष्या अब्रुवन् – ज्ञातस्तदर्थो दानमस्त्यहो !
ब्रह्मणा बाढमेवं स्यादित्युक्तं मानवान् प्रति ॥२२९॥

तथैव ब्रह्मणोरग्रे दानवाः पुनराययुः ।
उपदेशं प्रकुरुतामित्युक्तिस्तैर्निवेदिता ॥२३०॥

ब्रह्मणा चोपदिष्टास्ते दकारेणाक्षरेण वै ।
तेनोक्तं बाधितोऽर्थो मां प्रसन्नः स्यां निवेद्यताम् ॥२३१॥

बुद्धोऽस्माभिर्दकारार्थो दयध्वेति निवेदिताः ।
प्रजापतिस्तमर्थं च बाढमित्युक्तवान् पुनः ॥२३२॥

प्रजापतेर्दाक्षरस्य पुत्रार्थमनुशासनम् ।
निवेदयन् दकारार्थो वारिवाहोऽभिगर्जति ॥२३३॥

अद्यापि मेघनादेन दैवी वागू् वदतीत्यहो !
दमो दानं दया सर्वैः क्रियतामित्युदीरयन् ॥२३४॥

## भूमाविद्या

शिष्यः –

भो गुरो ! ऽहं कृतार्थोऽस्मि श्रुता शिक्षा सदात्मनः ।
आज्ञापयतु मामद्य भूमाविद्यामितः परम् ॥२३५॥

ब्रह्मन् ! षष्ठतमेऽध्याये सदात्मानमुपादिशत् ।
किमर्थं सप्तमेऽध्याये भूमानमुपदिष्टवान् ॥२३६॥

जिज्ञासेयं मम स्वान्ते समायाता गुरोऽधुना ।
आज्ञापयतु मामद्य स्वान्तं शान्तं करोतु मे ॥२३७॥

गुरुः –

प्रश्नः कृतः समीचीनो मतिस्ते निर्मलाऽभवत्[६] ।
संक्षेपेणोत्तरं वच्मि शृणु श्रुत्वाऽवधारय ॥२३८॥

श्रुतिः षष्ठतमेऽध्याये सदात्मानमुपादिशत् ।
सामान्यतत्त्वादुत्थाय स्वात्मतत्त्वं निरूपितम् ॥२३९॥

सप्तमे नामवागादिविकारादारभद् गुरुः ।
तदन्त्ये तु पुनर्भूम्न उपदेशमदाद् गुरुः ॥२४०॥

शिष्यः –

नाऽहं बुध्ये गुरो ! चैतत् स गुरुः कमुपादिशत् ।
सप्रसङ्गां कुरां वक्तुं योग्यं मां यदि मन्यते ॥२४१॥

---

६. बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा ।
प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ॥

गुरुः –

एकदा नारदो योगी स्वात्मज्ञानार्थमागतः ।
सनत्कुमारस्य पार्श्वे गुरूपसत्तिपूर्वकम् ॥२४२॥

अब्रवीन्नारदो योगी – ब्रह्मन् ! शोकाग्निनाऽधुना ।
सन्तप्तोऽस्मीह मां पारं करोतु शरणागतः ॥२४३॥

ततस्तयोः किमभवत् संवादे गुरुशिश्ययोः।
उपयुक्तो भवेत् ताभ्यां श्रोतुं सर्वं यथार्थतः ॥२४४॥

सनत्कुमारः –

आगतोऽसीह देवर्षे ! स्वागतं कुर्महे तव ।

नारदः –

अधुना शोकतप्तोऽहं पारं नयतु मां प्रभो ! ॥२४५॥

सनत्कुमारः –

अद्यावधि भवान् किं किं जानाति ? तद् ब्रवीतु माम् ।
ततः पश्चादहं वच्मि सावधानमना शृणु ॥२४६॥

नारदः –

ऋग्यजुर्वेदतो यावन्नृत्यसङ्गीतगीतकम् ।
सर्वं जानामि वेदान्तं श्रोतुं ब्रह्मन्निहागतः ॥२४७॥

सनत्कुमारः –

यदघोषि त्वया सर्वं केवलं नामरूपकम् ।
तदेव ब्रह्मरूपं हि संस्मृत्योपासनं कुरु ॥२४८॥

नामतो भूमरूपान्तं निष्ठामेकान्ततः कुरु ।
तज्ज्ञातुं ब्रह्मभावेन ह्युपदेशं समारभत् ॥२४९॥

शिष्यः –

आरब्धवान् किमर्थं स ब्रह्मरूपं हि नामतः ।
ज्ञातुं ब्रह्मत्वभावेन सोऽकरोदुपदेशकम् ॥२५०॥

भूमाप्रकरणान्ते य उपदेशः समागतः ।
गुरो ! तस्योपदेशस्य श्रोतुमिच्छा समासतः ॥२५१॥

गुरुः –

समागतानि नामानि साधनत्वेन संस्मर ।
सोपानत्वेन तान्येव साध्यमाप्तुं विचारय ॥२५२॥

गुरुणा लक्षितं तावद् भूम्नो लक्ष्यं हि चेतनम् ।
उपदिष्टं तदेवाऽग्रे यदस्ति जडसाधनम् ॥२५३॥

अन्त्ये सनत्कुमारेण चर्चितं सुखसाधनम् ।
भूम्न एवोपदेशार्थं कुमारोऽग्रेसरोऽभवत् ॥२५४॥

नारदः –

भूमा सुखं तदुभयमेकं वा भेदमेतयोः ।
आयान्मनसि जिज्ञासा गुरो मेऽद्य बलीयसी ॥२५५॥

सनत्कुमारः –

प्रश्नः कृतः समीचीनो भूमा सुखमुभौ समम् ।
सुखं न विद्यते चाल्पे भूमैव सुखरूपकम् ॥२५६॥

नारदः –

भगवन् ! श्रोतुमिच्छामि सर्वं भूम्नः स्वरूपकम् ।
आज्ञापयतु मामज्ञं ब्रह्मन् ! करुणयाऽधुना ॥२५७॥

सनत्कुमारः –

नाऽन्यं पश्यति भूमा तु नाऽन्यं शृणोति कञ्चन ।
कमप्यन्यं न जानाति भूमाऽस्ति सुखरूपकम् ॥२५८॥

बहिरन्तस्तदन्यद्धि दृश्यते श्रूयते हि यत् ।
तन्न भूमाऽस्ति न द्वैतं न तुच्छं त्रिपुटी न तत् ॥२५९॥

भूमाऽमृतं तथाऽऽनन्दो मर्त्योऽन्योऽस्त्यसदल्पकम् ।
एको भूमा हि बोद्धव्यो भूमा सच्चित्सचेतनम् ॥२६०॥

नारदः –
ब्रह्मन् ! वदत्वयं भूमा कस्मिन्नस्ति प्रतिष्ठितः ?

सनत्कुमारः –
भूमा सदा वरीवर्ति स्वे महिम्नि प्रतिष्ठितः ॥२६१॥

नारदः –
अद्वैतमस्ति भूमा तु तद्भिन्नो महिमा किमु ?
तस्मादद्वैतहानिः स्याद् भिन्नोऽस्ति महिमा यदि ॥२६२॥

सनत्कुमारः –
सत्याऽस्ति विद्वन् ! जिज्ञासा श्रुतिरन्त्ये वदत्यपि ।
भिन्नो न महिमा तस्य कथं द्वैतं भवेदहो ! ॥२६३॥

नारदः –
यदि भूमा स्वे महिम्नि प्रतिष्ठितो भवेत् किमु ?
भूमाऽप्रतिष्ठितोऽस्तीति श्रुतिरेवं वदेत् कथम् ? ॥२६४॥

सनत्कुमारः –
परस्पराश्रितौ स्यातां गवाश्वादौ यथा तथा ।
भूमा त्वेवंविधो नैवाश्रितो जानातु नारद ! ॥२६५॥

नारदः –

प्रतिष्ठितः क्वापि नैव भूमैवं कथमुच्यते ?

सनत्कुमारः –

व्याप्तः सर्वत्र भूमाऽस्ति स कस्मिन् स्यात् प्रतिष्ठितः ? ॥२६६॥

नारदः –

भूमा चाऽऽत्मा पृथक् स्यात् किमपृथक् स्यात् गुरो ! मयि ।
आशङ्काऽस्त्येव जिज्ञासा भवता मम शाम्यताम् ॥२६७॥

सनत्कुमारः –

आत्मारूपेण भूमाऽस्ति स्पष्टमादिशति श्रुतिः ।
आत्मा व्याप्तोऽस्ति सर्वत्र दृष्टिरेवंविधाऽस्ति हि ॥२६८॥

यः करोत्येवमात्मानं मननं तेन बुध्यते ।
भवेदात्मरतो विद्वान् स त्वात्ममिथुनायते ॥२६९॥

आत्मानन्दः स्वराड् भूत्वा यथेच्छं गमनायते ।
एवं यो बोधति विद्वानन्यथा बोधति क्षतिः ॥२७०॥

शिष्यः –

यो जानातीह भूमानं किं स्यात् तस्य फलश्रुतिः ।
श्रोतुमिच्छा गुरो ! तेन मुमुक्षोः कीदृशी मतिः ? ॥२७१॥

गुरुः –

प्रश्नः समुपयुक्तोऽस्ति ज्ञानी स्वाराज्यमाप्नुयात् ।
मोक्षमार्गः प्रशस्तः स्यात् तेन स्वच्छो भवेदिह ॥२७२॥

स्वाराज्यप्राप्तिपूर्वं तु नामादिजडवस्तुनः ।
सतोऽभवत् समुत्पत्तिरित्येषाऽऽयाति तन्मतिः ॥२७३॥

भूमाज्ञानं यदाऽऽयाति सदाऽऽत्माऽस्मीति बोधति।
सदाऽऽत्मनोऽभवत् सर्वा सृष्टिरेषा स बोधति ॥२७४॥

न पश्यति बुधो रोगं दुःखं मृत्युं न पश्यति।
परः सहस्रं जानाति रूपं व्यापकमात्मनः ॥२७५॥

यथा घटो मृदा व्याप्तः पटश्च सह तन्तुभिः।
कर्ता भोक्ताऽऽत्मभावेन व्याप्तमन्तर्जगत् तथा ॥२७६॥

'नेति नेति' द्वयं वाक्यं बाह्यमन्तर्जगद्द्वयम्।
क्रमशः खण्डनं कृत्वा ब्रह्माऽद्वैतं प्रतिष्ठते ॥२७७॥

अस्तित्वं त्रितयाऽऽकारं सदसद्वितथात्मकम्।
सद्रूपं तु परं ब्रह्म मायाऽसद् वितथं जगत् ॥२७८॥

क्षुत्पिपासाशोकमोहजरामरणजं भयम्।
षडूर्मिनाम्ना कथितमात्मज्ञानाद् विनश्यति ॥२७९॥

शिष्यः –

कथं शुद्ध्यति धीमतांमन्तः करणमात्मनः।
ब्रह्मन्नाज्ञापयत्वन्त्ये श्रुतेः किं कीदृशं मतम् ? ॥२८०॥

मुखाऽवभासको हेतुः स्वच्छः स्यान्मुकुरो यथा।
मोक्षार्थहेतुर्बुद्धिस्याच्छुद्धा कर्तुर्न चाऽन्यथा ॥२८१॥

अन्त्ये सनत्कुमारोऽपि ब्रह्मज्ञानफलं पुनः।
अब्रवीन्नारदं चित्तसंशुद्धिक्रमपूर्वकम् ॥२८२॥

आहारशुद्धौ सत्त्वस्य शुद्धिर्भवति नान्यथा।
ततोऽन्तःकरणं शुद्धं भवति स्मृतिवर्द्धकम् ॥२८३॥

स्मृतिर्यदा वर्द्धते ते ज्वलन्ति ग्रन्थयोऽपि ते ।
अकुण्ठिता भवेद् बुद्धिर्ब्रह्मज्ञो मुच्यते तदा ॥२८४॥

सनत्कुमारतो भूमाज्ञानं कृत्वा स नारदः ।
अज्ञानतमसः पारं तरन् धामाऽगमत् स्वकम् ॥२८५॥

शान्तिपाठः

ॐ भद्रं कर्णेभिःशृणुयाम देवाः भद्रं पश्येमाऽक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर् व्यशेमहि देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

॥ इति छान्दोग्योपनिषत्कारिका ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# बृहदारण्यकोपनिषत्कारिका

शङ्करः शङ्कराचार्यः सद्गुरुः शर्वसन्निभः ।
सर्वेषां शङ्कराः सन्तु सच्चिदानन्दरूपिणः ॥

शान्तिपाठः

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

शिष्यः –

बृहदारण्यकं चापि वक्तव्यं भवता गुरो !
यद्यत्र श्रूयते चेत् तदग्रे बोद्धुं सुखायते ॥१॥

गुरुः –

सम्बन्धभाष्यादन्वत्र वाक्संवत्सरवर्णनम् ।
आयाति प्रथमेऽध्याये चाश्वमेधस्य वर्णनम् ॥२॥

स्पर्धाऽपि देवाऽसुरयोर्मुख्यप्राणादिनामपि ।
उद्गीथास्ते साममन्त्रगाायकास्तद्विदामपि ॥३॥

ये प्राणोपासकास्तेषां वर्णनं सृष्टिवर्णनम् ।
नामरूपाणि कर्माणि सत्येन पिहितानि च ।
तदाऽऽत्माऽमृतमस्तीति वर्णनं कुरुते श्रुतिः ॥४॥

सृष्टिवर्णनसन्दर्भे प्रजापत्यादिकानपि ।
अहं ममेति भावार्थोऽव्याकृतं ब्रह्म शब्दितम् ।
वर्णनं कुरुते सृष्टौ विप्रक्षत्रविडन्त्यजान् ॥५॥

धर्मोदयं तथोपासां सर्वरूपचिदात्मनः ।
श्रुतिः प्रशंसते सृष्टौ चाऽऽन्नभेदविभागताम् ॥६॥

प्रवृत्तिमार्गबीजानां कर्मणां पाङ्क्तकर्मणाम् ।
वर्णनं कुरुतेऽत्रैव श्रुतिः सम्प्रति कर्मणाम् ॥७॥

गार्ग्यस्याऽजातशत्रोश्च संवादश्चलतीत्यतः ।
आत्मस्वरूपबोधार्थं दृष्टान्तान् बहु दर्शय ॥८॥

प्रत्यक्षं शास्त्रयोनित्वाज्जन्मादि जगतोऽभवत् ।
ऊर्णनाभेस्तन्तुजालं यथाऽग्नेर्विस्फुलिङ्गवत् ॥९॥

देहप्राणशिरश्चक्षुः कर्णनासारसालकान् ।
द्विविधं ब्रह्मणोरूपं मूर्ताऽमूर्तं च शंसति ॥१०॥

इत परं तु हे वत्स ! मैत्रेयीयाज्ञवल्क्ययोः ।
आत्मनो विषयेऽनन्यसमः संवाद आगतः ॥११॥

वेदान्तविषयेऽगम्यं संवादमिममद्भुतम् ।
शुश्रूषा मे श्रावयतु मैत्रेयीयाज्ञवल्क्ययोः ॥१२॥

शिष्यः –

जिज्ञासा वर्द्धिता ब्रह्मन् ! कथं शाम्यति साऽधुना ।
भवच्छरणमापन्नो मुञ्चेयं भो गुरो ! कथम् ? ॥१३॥

गुरुः –

**वेदान्तः पठनीयोऽस्ति भवबन्धनमुक्तये ।**
**भोगान् तुच्छान् विजानीहि स्वर्गीयानैहिकानपि ॥१४॥**

शिष्यः –

किं तद्वेदान्तसच्छास्त्रं किं स्यादुपनिषन्मतम् ?
तत्त्वतः श्रोतुमिच्छामि भवान् ब्रह्मविदांवरः ॥१५॥

गुरुः –
वेदान्तो नाम हे सौम्य ! विद्धि ह्युपनिषन्मतम् ।
विनोपनिषदां ज्ञानं तत्त्वज्ञानं न बुध्यते ॥१६॥

तदर्थमधुना सौम्य ! कञ्चिदुपनिषन्मतम् ।
सारल्येन प्रवक्ष्यामि वेदान्तं बोद्धुमुत्सुकम् ॥१७॥

आसीद् ज्ञानी याज्ञवल्क्यो धर्मपत्नीद्वयान्वितः ।
ब्रह्मज्ञानप्रदाता यो नृपं जनकमागतः ॥१८॥

शिष्याः शिष्यगणा आसन् वेदविद्यां प्रपाठयन् ।
प्रोज्ज्वलद्ज्ञानदीपेन चाज्ञानान्धो निवारितः ॥१९॥

आसन् ब्रह्मविदस्तत्र रममाणाः समाधिषु ।
स्वात्मन्येव विलीयन्ते कुर्वाणा ब्रह्मचिन्तनम् ॥२०॥

अगमन् बहुवर्षाणि वेदवेदान्तपाठयन् ।
वैराग्यस्योदयो जातो गार्हस्थ्याऽऽश्रममाश्रयन् ॥२१॥

ऋषिणा तेन संन्यासग्रहणं कर्तुमिच्छता ।
जाग्रत्पत्नीद्वयस्याग्रे मानसेच्छा निवेदिता ॥२२॥

## याज्ञवल्क्य–मैत्रेयीसंवादः

पत्नीद्वयमिहाऽऽयातु स्वं स्वं दायं गृहाण हे !
संन्यासाऽऽश्रममन्विच्छन्नहं गच्छाम्यतः शृणु ॥२३॥

मैत्रेयी –
हे स्वामिन् ! सम्पदो भागं गृहीत्वा कोऽमरोऽभवत् ।
आज्ञापयतु सुस्पष्टं को मुक्तोऽनेन मामिह ॥२४॥

कात्यायनी प्रगृह्णातु भवतः सर्वसम्पदम् ।
ज्ञानं ददातु मह्यं तु नेच्छामि तुच्छवैभवम् ॥२५॥

गुरुः –
ज्येष्ठा पत्नी तु मैत्रेयी ह्यासीत् कात्यायनी परा ।
मैत्रेयी धनसम्पत्तिं भगिन्यै प्राददात् स्वयम् ॥२६॥

श्रुत्वैतद् याज्ञवल्क्योऽपि सुप्रसन्नोऽभवत् ततः ।
अनन्तरं किमवदत् तद् वयं शृणुमोऽधुना ॥२७॥

याज्ञवल्क्यः –
त्वया सुरम्यः प्रश्नोऽयं कृतो मैत्रेयि ! साम्प्रतम् ।
सत्यं त्वमसि जिज्ञासुर्मुमुक्षुपथमागता ॥२८॥

धनान्मुक्तिर्न भवति धनेनाऽहं विवर्द्धते ।
सत्यमन्धो भवत्येव धनादज्ञो विशेषतः ॥२९॥

मैत्रेयी –
धनं किमर्थं गृह्णीयां धनान् मुक्तिर्मिलेन्न चेत् ।
कस्मान् मुक्तिर्मिलेद् विद्वन्नाज्ञापयतु मामिह ॥३०॥

याज्ञवल्क्यः –
इतो वक्ष्यामि मैत्रेयि ! येन त्वममृतायसे ।
श्रुत्वा त्वं मननं कुर्या यन्मत्तः श्रुतिगोचरम् ॥३१॥

परस्परं भावयन्तौ पतिपत्न्यौ सुहृज्जनौ ।
आनन्दमनुभूयेतां नान्येषां तत्प्रयोजनम् ॥३२॥

एतदर्थं महावाक्यं श्रोतव्यं गुरुसन्निधौ ।
मननं क्रियतां पश्चात् त्वया जिज्ञासमानया ॥३३॥

निदिध्यासनमप्यस्य क्रियतां मननान्तरम् ।
अभ्यासार्थं विनीतेन सद्गुरुं निकषा त्वया ॥३४॥

**अयमात्मा दर्शनीयः श्रवणीयः सदैव हि ।**
**मननीयो निदिध्यास्योऽभ्यस्यो वैराग्यपूर्वकम् ॥३५॥**

सर्वं प्रपञ्चं मैत्रेयि ! त्वया त्याज्यं प्रयत्नतः ।
वेदान्तश्रवणार्थं हि त्वमग्रेसर यत्नतः ॥३६॥

मैत्रेयी –
स्वामिन् ! महत्त्वं संश्राव्यं भवता महदात्मनः
अतीवौत्सुक्यमाधाय श्रोतुमस्मीह तत्परा ॥३७॥

याज्ञवल्क्यः –
**सर्वात्मा परमात्माऽस्ति जन्माद्यस्य यतोऽस्ति हि ।**
**सर्वे वसन्ति जीवन्ति ह्यमुष्मिन् विलयन्त्यपि ॥३८॥**

पश्योदाहरणं चाऽत्र वीणादुन्दुभिनिस्वनाम् ।
आत्माऽऽकाशात् समायान्ति तत्रैव विलयन्ति च ॥३९॥

यथेन्धनाऽग्निसंयोगाद् धूमा आयान्ति यान्त्यपि ।
तथाऽऽत्मनो हि निश्वासाद् वेदा आयान्त्यहो ! [१]ध्रुवम् ॥४०॥

मिश्रिते लवणे सर्वं पानीयं लवणायते ।
यथा तथेयं सृष्टिश्च सदाऽऽत्मन्येव दृश्यते ॥४१॥

सूत्रे स्यूता मणिगणा यथा मालाश्चकाशते ।
तथाऽऽत्मन्येव संस्यूताः सृष्टिश्चापि प्रकाशते ॥४२॥

---

१. अस्य महतो भूतस्य निश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः ।

मैत्रेयी –
'विलये सति तद्वस्तुसत्तासंज्ञा विलीयते।'
यत्प्रोक्तं भवता तत्र मनो मेऽतीव मोहितम् ॥४३॥

याज्ञवल्क्यः –
तवैतन्मोहनाशार्थमुपदेष्टुं ममोद्यमः।
शृणु त्वं सावधानेन मयाऽऽत्माऽद्योपदिश्यते ॥४४॥

द्वैतदृष्टिस्थिरा चेत् ते द्वैतं वस्तु प्रदृश्यते।
भवेदद्वैतदृष्टिस्ते सदाऽऽत्मा दृश्यतेऽनिशम् ॥४५॥

आत्मा व्याप्तोऽस्ति सर्वत्र तत्र कः कं निभालयेत्।
विज्ञातारं तु मैत्रेयि ? को ज्ञातुं शक्नुयादिह[२] ॥४६॥

शिष्यः –
संवादानन्तरं ब्रह्मन् ! मैत्रेयीयाज्ञवल्क्ययोः।
आज्ञापयतु मध्वादिमाख्यायिकां प्रसङ्गतः ॥४७॥

गुरुः –
पूर्वप्रसङ्ग आयाते मधुब्राह्मणपूरणे।
मधुविद्या समायाता सर्वं मधुमयं जगत् ॥४८॥

पृथिव्यादिषु सर्वत्र ह्युपकार्योपकारकम्।
सर्वेषां मूलमस्त्येष आत्मा सृष्टिधरो विभुः ॥४९॥

भर्तृप्रपञ्चं तत् सर्वं प्रत्याख्यातं विशेषतः।
भाष्ये विलिखितं चैतत् पठिते सति बुध्यते ॥५०॥

---

२. येनेदं सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे ! केन विजानीयात्।
– बृहदारण्यकोपनिषद् २।४।१४

अन्त्ये तु मधुविद्यायाः कुमारावुभयाश्विनौ ।
दधीचिना चोपदेशः श्रुतिर्वर्णयतीत्यतः ॥५१॥

दध्यङाथर्वणो धीमान् वाजिनो मुखयोजितः ।
आत्मविद्यां वर्णयति शृणु त्वमपि तन्मुखात् ॥५२॥

दध्यङाथर्वण ऋषिः –
सत्यस्य पालनं कुर्वन् त्वष्टासम्बन्धिनी मधु ।
आत्मविद्या मया प्रोक्ता सौम्य ! जानीहि संप्रति ॥५३॥

अश्विनीकुमारौ –
प्रवर्ग्यकर्मसम्बद्धा मधुविद्या तु संश्रुता ।
आज्ञापयतु तामद्य श्रोतुमिच्छाऽऽवयोर्द्वयोः ॥५४॥

दध्यङाथर्वण ऋषिः –
प्रवर्ग्यकर्मसम्बद्धा विद्याऽध्यायद्वयेरिता ।
मन्त्रद्वयाभ्यां या प्रोक्ता सा युवामिह संश्रुतौ ॥५५॥

इतोऽपि ब्रह्मसम्बद्धा विद्याऽध्यायद्वयाऽऽश्रिता ।
मन्त्रद्वयाभ्यामेवाऽत्र प्रोच्यते शृणुतं युवाम् ॥५६॥

असृजत् परमात्माऽयं प्रथमं द्विपदां तनुम् ।
तत्पश्चादसृजत् सोऽयं चतुष्पादमयीं तनुम् ॥५७॥

परात्मा पक्षिणौ भूत्वा मानुषीं पुरिमाश्रितः ।
अतः पुरिशयो नामाऽभवत् तस्य [३]परात्मनः ॥५८॥

तादृक् पुरं क्वचिन्नास्ति प्रवेशस्तस्य न क्वचित् ।
तादृक् स्थानं क्वचिन्नास्ति न व्याप्तं तेन न क्वचित् ॥५९॥

---

३. स वाऽयं पुरुषः सर्वासु पुर्षु पुरिशयो नैनेन किञ्चन । नाऽऽवृतं नैनेन किञ्चनाऽसंवृतम् ।
– बृहदारण्यकोपनिषद् २।५।१८

सैवायमात्मा रूपाणि गृहीत्वा प्रतिमूर्तिषु ।
स्वप्रतिख्यापनार्थं हि नानारूपाणि [४]सोऽग्रहीत् ॥६०॥

स्वमायया नैकरूपे [५]भासते परमेश्वरः ।
नामरूपे तु मिथ्या स्तः सर्वत्र नरिनर्ति सः ॥६१॥

अयमात्मा तु ब्रह्मैव सच्चिदानन्दविस्तृतः ।
विजातीयादबाह्याच्च वस्तुनः स परात्परः ॥६२॥

प्राणिनां सुमतौ हाऽऽस्ते सच्चिदात्मा सनातनः ।
सर्ववेदान्तसारोऽयमुपदेशानुशासनम् ॥६३॥

शिष्यः –

पश्चान्मधुब्राह्मणस्य कः प्रसङ्गोऽत्र विद्यते ।
शुश्रूषा मेऽधुना ब्रह्मन् ! येन ज्ञानं विवर्द्धते ॥६४॥

गुरुः –

याज्ञवल्कीयकाण्डोऽस्ति तत्पश्चादागमिष्यति ।
प्रश्नोऽयं तव रम्योऽस्ति येन ज्ञानं विवर्द्धते ॥६५॥

वस्तुतो मधुकाण्डं तु ह्यासीत् शास्त्रप्रधानकम् ।
याज्ञवल्क्यमिदं काण्डमस्ति युक्तिप्रधानकम् ॥६६॥

शास्त्रयुक्तिरुभाभ्यां हि विद्ध्यात्मैकत्वदर्शनम् ।
मधुकाण्डं चैतदर्थं वरीवर्ति प्रवर्तितम् ॥६७॥

आकार्षीज्जनको राजा शास्त्रचर्चां सदैव हि ।
याज्ञवल्क्योऽभवन्मुख्यो ब्रह्मज्ञानी बुधो गुरुः ॥६८॥

---

४. रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय । – बृहदारण्यकोपनिषद् २।५।१९

५. इन्द्रो मायाभिः पुरुरूप ईयते । – बृहदारण्यकोपनिषद् २।५।१९

एकदा जनको राजा यज्ञं कर्तुं समारभत् ।
ब्रह्मज्ञा वेदविद्वांसोऽधिकास्तेन निमन्त्रिताः ॥६९॥

ब्रह्मचर्चां कारयितुं जनकेन समीहितः ।
ब्रह्मिष्ठो यो भवेत् तस्मै पुरस्कर्तुं च घोषितः ॥७०॥

समारभत शास्त्रार्थं जल्पेनोभयपक्षतः ।
पूर्वपक्षे स्थिता नैके याज्ञवल्क्यो विपक्षतः ॥७१॥

अश्वलो नाम होताऽऽसीत् प्रश्नं प्रस्तुतवान् पुरः
याज्ञवल्क्येन चोत्थाय सर्वे प्रश्नाः समाहिताः ॥७२॥

आर्तभागश्च भुज्युश्च उषस्तोऽपि च कोहलः ।
गार्ग्याऽऽरुणेरनु प्रश्नः शाकल्यस्य समागतः ॥७३॥

यथाक्रमे यथायोग्यमुत्तरं प्राप्तवान् सभा ।
अन्त्ये निपतितो मूर्धा शाकल्यस्याऽन्यथाकृते ॥७४॥

शिष्यः –

ब्रह्मन् ! शाकल्यस्य कथं मूर्धापातोऽभवत् खलु ।
किमपृच्छत् पूर्वपक्षस्तदुत्तरमभूत् किमु ? ॥७५॥

गुरुः –

शाकल्येन कृतः प्रश्नोऽवैदान्तिकसमागतः ।
सभायां याज्ञवल्क्योऽपि बहु तेनाऽवमानितः ॥७६॥

[६]वेदान्तवेद्यं पुरुषमप्राक्षीद् ब्रह्मविद्गुरुः ।
अस्योत्तरमकुर्वाणो मूर्धा ते विपतिष्यति ॥७७॥

---

६. तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यति ।
– बृहदारण्यकोपनिषद् ३।९।२६

मुनेः प्रश्नोऽनुत्तरितः शाकल्योऽवागभूत् तदा ।
तस्य मूर्धाऽपतन्नीचैः शाकल्योऽवाक्शिराऽपतत् ॥७८॥

शिष्यः –
शाकल्यस्य किमर्थं तच्छिरोऽभूत् पतनं गुरो !
मनो मे विस्मितं ब्रह्मन् ! आश्चर्यमभवं तदा ॥७९॥

आज्ञापयत्वद्य गुरो ! रहस्यं किञ्चिदस्ति किम् ?
निरर्थकं शिरःपातं शाकल्यस्याऽभवत् कथम् ? ॥८०॥

गुरुः –
प्रश्नः समुपयुक्तोऽस्ति श्रुत्वा मनसि धारय ।
वेदान्तमपठन् वत्स ! शास्त्रार्थेऽग्रेसरो न भूः ॥८१॥

शाकल्यस्य महान् दोषो वेदान्तमपठन् गतः ।
अवेदान्ती स्वयं भूत्वा शास्त्रार्थेऽग्रेसरोऽभवत् ॥८२॥

वेदान्तमपठन् यः कः शास्त्रार्थेऽग्रेसरो भवेत् ।
पतनं निश्चितं तस्य ह्ययोग्योऽग्रेसरो यदि ॥८३॥

संक्षेपेण वदन्नाऽसं जिज्ञासा यदि वत्स ! ते ।
मया विलिखितान् ग्रन्थान् तथोपनिषदः पठ ॥८४॥

'औपनिषदः पुरुषः' नाम्ना ग्रन्थः प्रकाशितः ।
पठ वत्स ! तमन्विष्य बोद्धुं शक्नोषि निश्चयम् ॥८५॥

अन्त्ये सर्वान् समाहूय याज्ञवल्क्योऽवदद् बुधः ।
जिज्ञासा भवतां काश्चित् ? पृच्छन्तूत्तरयाम्यहम् ॥८६॥

कर्तुं वेदान्तशास्त्रार्थं न कश्चिद् ब्राह्मणः क्षमः ।
श्रुतिरूपः स्वयं भूत्वा प्रश्नानुत्तरयत् स्वयम् ॥८७॥

तुलनं कुर्वता तेन समाजे नरवृक्षयोः ।
प्रश्नः पुरस्कृतस्तत्र सर्वेऽवाचोऽभवन् बुधाः ॥८८॥

'विज्ञानघनमानन्दं ब्रह्मैव परमा गतिः ।
ब्रह्मिष्ठस्य ब्रह्मवेत्तुः सद्गतिः परमाश्रयम्' ॥८९॥

श्रुतिरुत्तरयाञ्चक्रे याज्ञवल्क्यमुखादिह ।
अक्षमा उत्तरं कर्तुं सर्वेऽवाक्शिरसोऽभवन् ॥९०॥

## याज्ञवल्क्य–जनकसंवादः

शिष्यः –

स्वकीयवेदशाखाया महावाक्यं किमस्ति भो !
कथं तदर्थं बुध्येय यावदद्य श्रुतं न तत् ॥९१॥

किमस्ति तन्महावाक्यं श्रवणीयं मया हि यत् ।
किञ्चाऽनुभवगम्यं स्यान् महावाक्यं पुनर्गुरो ! ॥९२॥

श्रवणीयं महावाक्यमनुभूत्यात्मकं च यत् ।
आज्ञापयतु मामद्य सुस्थिरोऽहं शृणोम्युभौ ॥९३॥

'तत् त्वं असि' महावाक्यं श्रोतव्यमस्ति सर्वतः ।
विद्वांसो ब्रुवते चैतन्मानसं मे न मन्यते ॥९४॥

'अहं ब्रह्माऽस्मी'ति वाक्यमनुभूत्यात्मकं भवेत् ।
ब्रुवते हि बुधाः सर्वे मनुते मानसं न मे ॥९५॥

अतएव गुरोरद्य शुश्रूषा मेऽस्ति शास्त्रतः ।
महावाक्यस्य जिज्ञासा गुरो ! वदतु तत्त्वतः ॥९६॥

गुरुः –

अतीव श्रेष्ठः प्रश्नोऽयं विहितः सुव्रत ! त्वया ।
भवन्तमुपदेक्ष्यामि महावाक्यानि शास्त्रतः ॥९७॥

महावाक्यविचारस्य ग्रन्थोऽपि लिखितो मया ।
सावधानतया विद्वन् ! पठिते बुध्यते त्वया ॥९८॥

पृष्ठभूमिं दर्शयेऽत्र प्रथमं त्वयि संस्मर ।
पश्चात् संश्रावये तानि महावाक्यानि निश्चयम् ॥९९॥

मिथिला नगरे राजा जनको नाम विश्रुतः ।
शास्त्रार्थे रमते नित्यं ब्रह्मज्ञानी सदाऽभवत् ॥१००॥

स नित्यं राजभवने ब्रह्मविदः समाह्वयन् ।
ब्रह्मचर्चां प्रकुरुते शास्त्रार्थं सञ्चलत्यपि ॥१०१॥

याज्ञवल्क्यो मुनिर्मुख्यो ब्रह्मज्ञो विबुधोत्तमः ।
शास्त्राचार्यपदं तस्मै श्रीगुरोः पदवीमदात् ॥१०२॥

शिष्यः –
याज्ञवल्क्यमुने राज्ञः संवादः क्वाऽभवद् गुरो !
कस्मिन् विषयसम्बद्धो जल्पो वादकथाऽपि वा ॥१०३॥

गुरुः –
प्रश्नः समुचितस्तेऽस्ति प्रफुल्लं मे मनोऽभवत् ।
बृहदारण्यकादेव प्रसङ्गोऽयमुदीर्यते ॥१०४॥

एकस्मिन् समये याज्ञवल्क्यः प्रासादमागतः ।
सत्कृतो जनकेनाऽसौ सुप्रसन्नोऽभवद् गुरुः ॥१०५॥

दुरूहोऽपि बृहद्ग्रन्थो बृहदारण्यनामकः ।
शङ्करेण कृते भाष्ये प्रबोधे कठिनायते ॥१०६॥

वक्तुश्च श्रोतुरुभयोः सामर्थ्यं प्रविचार्य च ।
संक्षेपेणेह वक्तव्यं मन्येऽहमुपयुक्तकम् ॥१०७॥

वाग्ब्रह्मणोरभूच्चर्चा संवादे प्रथमे तयोः ।
प्राणात्मभूतविदुषो रूपे सर्वात्मकेऽपि च ॥१०८॥

लम्बायमाना चर्चाऽभूद् विनम्रो जनकोऽभवत् ।
गुरूपसत्तिपूर्वेण सर्वस्वं गुरवेऽर्पयत् ॥१०९॥

प्राप्तोऽसि जनको भूयाऽभयं ब्रह्मोपदेशतः[७] ।
संवादो ब्रह्मसम्बन्धी चलन्नग्रे गतः क्रमात् ॥११०॥

शिष्यः –
मोक्षहेतुर्महावाक्यं यत् साक्षात् श्रुतवान् नृपः ।
पश्चादनेकान् प्रश्नान् स किमर्थं पृष्टवान् गुरुम् ॥१११॥

गुरुः –
प्रथमं तु महावाक्यं श्रोतव्यं तदनन्तरम् ।
मननादिकमभ्यासः कर्तव्यो बोधहेतवे ॥११२॥

'तत् त्वम् असि' महावाक्ये नववारं श्रुते सति ।
पश्चात् 'तद्धास्य विजज्ञा'विति ज्ञानमभूत् ततः ॥११३॥

एवं ब्रह्मविदाऽभ्यस्तोऽ'भयं वै' च श्रुतो यदा ।
ब्रह्माऽभ्यासमभूद् राज्ञो जनकस्य पुनः पुनः ॥११४॥

शास्त्रार्थमभवद् ब्रह्मविदा सह यदा तदा ।
निदिध्यासनतो 'ब्रह्माऽस्म्यहं' बोधोऽभवत् पुनः ॥११५॥

शिष्यः –
सुस्पष्टं श्रव्यमन्यच्च महावाक्यादनन्तरम् ।
संवादः कीदृशो जातो राजागुर्वोरुपस्थिते ॥११६॥

---

७. अभयं वै जनक प्राप्तोऽसि । – बृहदारण्यकोपनिषद् ४।२।४

गुरुः –

अपृच्छज्जनकः किं किमभाणि गुरुणा किमु ?
तयोः प्रश्नोत्तरं श्रुत्वा तज्ज्ञानमवधारय ॥११७॥

जनकः –

पञ्च ज्योतींषि कानीह कर्म तेषां किमस्ति भो ?
ब्रह्मन् गदतु सारांशे स्थानं तेषां क्व वर्तते ? ॥११८॥

याज्ञवल्क्यः –

आदित्यश्चन्द्रमा वह्निर्वाग्ज्योतिः क्रमशस्ततः ।
आत्मज्योतिः समेतं तत् पञ्चज्योतींषि पश्यतु ॥११९॥

सूर्यज्योतिरस्तमिते चन्द्रज्योतिः प्रकाशते ।
चन्द्रज्योतिरस्तमिते वह्निज्योतिः प्रकाशते ॥१२०॥

अग्निर्ज्योतिर्गतेऽस्तं तद् वाग्ज्योतिरिह काशते ।
वाग्ज्योतिर्विरते तस्मिन् आत्मज्योतिः प्रकाशते ॥१२१॥

आभासमात्रमन्यानि ज्योतींषि प्रविचारय ।
आत्मज्योतिः स्वस्वरूपं चिद्रूपं प्रतिविम्बति ॥१२२॥

अन्येषामुदयास्तं स्यादात्मज्ज्योतिः सनातनम् ।
अन्ते सर्वाणि ज्योतींषि विलयन्ति महात्मनि ॥१२३॥

नादित्यश्चन्द्रमा नाग्निर्न विद्युद् वाक् प्रकाशते ।
ब्रह्माऽऽभासमवाप्यैव प्रकाशन्ते यथार्थतः ॥१२४॥

शिष्यः –

आत्मज्योतिश्चिदाभासं स्वप्रकाशं सनातनम् ।
संवादः कोऽभवच्चान्यः शुश्रूषा मनसो मम ॥१२५॥

गुरुः –

आत्मस्वरूपविषये जिज्ञासा भूपतेरभूत् ।
प्रश्नोत्तरं कथमभूत् श्रवणीयं ततो वरम् ॥१२६॥

जनकः –

जायते म्रियते चाऽऽत्मा जनैरेवं विचार्यते ।
सदा सन्देहवानस्मि नित्यः कथमयं भवेत् ॥१२७॥

याज्ञवल्क्यः –

**न जायते न म्रियते नित्य आत्मा सनातनः ।**
**जननं मरणं भानमध्यासादस्ति केवलम् ॥१२८॥**

इहाऽमुत्र विचारेण स्थानद्वितयमात्मनः ।
तृतयं स्थानमप्यस्ति स्वप्नमेकं चिदात्मनः ॥१२९॥

स्वप्ने जागरणे चैव भ्रमत्यात्मा झषो यथा ।
संस्कारवासनाभ्यां स स्वप्ने रचयिता भवेत् ॥१३०॥

बुद्धीन्द्रियाणि सर्वाणि सुषुप्तिं यान्ति तानि तु ।
अविद्यातमसि प्रायो विलयन्ति स्वपन्ति च ॥१३१॥

जनकः –

सुषुप्तिकाले जीवस्य स्थितिः का भवति गुरो !
आत्मनः स्वप्रकाशस्य स्थितिः का तत्क्षणे भवेत् ॥१३२॥

याज्ञवल्क्यः –

प्रश्नोऽयमतिरम्योऽस्ति सुषुप्तिर्दुर्गमाऽस्त्यहो !
वेलाऽऽनन्दमया सैषा ह्यबोध्या कठिनाऽप्यहो ! ॥१३३॥

बुद्धीन्द्रियं विना कश्चित् प्रतिविम्बो न दृश्यते ।
प्रतिबिम्बोऽपि मिलति साक्षी विम्बो यथा तथा ॥१३४॥

भेदद्वयी सुषुप्त्यस्ति तदवस्थाऽनुसारतः ।
प्रज्ञस्थित्यानुसारेण प्राज्ञावस्था विशेषतः ॥१३५॥

जायन्ते वृत्तयस्तिस्रः सुषुप्तिकाल आगते ।
शास्त्रैर्मोमुदितैरुक्तं-ब्रह्मानन्दं मिलत्यहो ! ॥१३६॥

सक्ष्याकारा हि प्रथमा वृत्तिर्जानाति सा सदा ।
"'द्रष्टुर्दृश्यविलोपो न विद्यते' वदति श्रुतिः ॥१३७॥

द्रष्टा नित्योऽस्त्यतः सर्वं पश्यत्येष सदैव हि ।
दृश्यं नास्ति सुषुप्तौ सोऽद्वयो भूत्वा वसत्यहो ! ॥१३८॥

द्वितयावृत्तिरानन्दाकारा वर्वर्ति चात्मनः ।
'आनन्देनाऽहमस्वाप्सं' वदतीह समुत्थितः ॥१३९॥

'तृतयावृत्तिरज्ञानाकारा' किञ्चिन्न बुध्यते ।
साक्षी भूत्वा सुषुप्तेः सः सर्वं जानाति सर्वतः ॥१४०॥

यथा स्वपतिना सुप्त्वाऽऽलिङ्गिताऽऽश्लेषिताऽपि वा ।
आनन्दपूर्णा भवति पत्नी दुःखानि विस्मृता ॥१४१॥

तथैवाऽऽत्मा सुषुप्तौ तु ह्येकीभूतश्चिदात्मना ।
गाढमालिङ्गति निद्राव्याजेनाऽऽनन्दमश्नुते ॥१४२॥

न पश्यति न शृणोति न वक्ति न च जिघ्रति ।
सहैवाऽपीन्द्रियैरात्मा न जानाति किमप्यहो ! ॥१४३॥

सुषुप्तौ तदतद् दृश्यं तमसि प्रविलुप्यते ।
अतः साक्षी स जीवाऽऽत्मा श्रुत्युक्तं नैव पश्यति ॥१४४॥

---

८. न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । – बृहदारण्यकोपनिषद् ४।३।२३

सुषुप्तौ प्रविलुप्तोऽपि स्वप्ने तु समुदेति सः ।
पुण्य पापानि संपश्यन् जीवाऽऽत्माऽऽयाति जाग्रति ॥१४५॥

शिष्यः –
आत्मनः पञ्चज्योतींषि ह्यवस्था जाग्रदादयः ।
श्रुता ब्रह्मन्नितः श्राव्या जीवानां कीदृशी गतिः ॥१४६॥

गुरुः –
अथापि जनकप्रश्नान् याज्ञवल्क्योत्तराणि च ।
संक्षेपेण वयं सर्वं ताभ्यां संशृणुमोऽधुना ॥१४७॥

जनकः –
हे ब्रह्मन्नन्ततो वाच्या जीवस्य कीदृशी गतिः ।
सुस्पष्टमाज्ञापयतु शुश्रूषा मयि तत्त्वतः ॥१४८॥

याज्ञवल्क्यः –
पञ्चज्योतींषि हे राजन् ! जाग्रत्स्वप्नसुषुप्तयः ।
श्रुता त्वत्तोऽनु वक्ष्यामि जीवानां कीदृशी गतिः ॥१४९॥

भुक्त्वा प्रारब्धकर्माणि यदा मृत्युमुपैति सः ।
ज्ञानहीनो भवेज्जीवो निश्चेष्टो दुर्बलोऽक्षमः ॥१५०॥

प्राणेन्द्रियाणि निःसृत्य लिङ्गदेहाऽनुगामिनः ।
हृदयाग्रं प्रकाशन्ते स्थूलदेहात् समुद्गताः ॥१५१॥

तेषामनुसृतिं कृत्वा जीवात्मामुखनिर्गतः ।
साकं लिङ्गाख्यदेहेन प्रस्थानं कुरुते क्षणात् ॥१५२॥

जनकः –
अनेकजन्मपूर्वास्ते संस्काराः के समागताः ?
तान् शुश्रूषा समायाता कथं समुदयन्ति ते ॥१५३॥

याज्ञवल्क्यः –

[९]प्रज्ञा विद्या च कर्माणि जीवात्मानोऽनुगामिनः ।
ये भुक्ता विषयोद्भूता वासनामयरूपिणः ॥१५४॥

इममेव श्रुतेरर्थं गीतायामगदत् प्रभुः ।
चष्टे तमर्जुनं कृष्णः पठितव्यं मुमुक्षुभिः ॥१५८॥

पूर्वदेहं समुत्सृज्य जीवोऽन्यं देहमाश्रितः ।
अस्योदाहणं दृश्यं यथा तृणजलायुका ॥१५९॥

आत्मा तु विज्ञानमयः स आनन्दमयोऽपि च ।
कर्मानुसारी फलभुग् जन्मजन्मान्तरेऽपि सः ॥१६०॥

यस्यां योनौ जन्म लब्धं तद्योनिकृतकर्मणः ।
फलं भुनक्ति जीवात्मा तद्योनौ वाऽन्यजन्मनि ॥१६१॥

अकामो वाऽपि निष्काम आत्मकामोऽपि वा जनः ।
ब्रह्मज्ञो ब्रह्मवेत्ताऽस्ति स तु ब्रह्म सनातनम् ॥१६२॥

ज्ञानीजनानां प्राणास्तु नोत्क्रमन्तीति वक्त्यहो !
श्रुतिरेषा, ब्रह्म पूर्वं जीवो ब्रह्मैव सम्भवेत् ॥१६३॥

येषामस्तमिताः सर्वा मनःकामा यथार्थतः ।
जीवन्मुक्ता भवन्त्येते ज्ञानिनो मुक्तबन्धनाः ॥१६४॥

यथा मुञ्चति निर्मोकमहिश्चरति निस्पृहः ।
ब्रह्मज्ञो मनुते तद्वद् देहो निर्मोकवद् वृथा ॥१६५॥

---

९. शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनुत्क्रामति प्राणमनुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । – बृहदारण्यकोपनिषद् ४।४।२

शिष्यः –

याज्ञवल्क्यादेवमिदं गुह्यं तत्त्वं श्रुते सति ।
राज्ञः स्थितिः कीदृशी स्यात् कः प्रसङ्गोऽचलत् तदा ॥१६६॥

गुरुः –

अविद्याविद्ययोरेवं मोक्षमार्गोऽपि कीदृशः ।
त्वदग्रे दर्शिता सौम्य ! ज्ञानिनोऽज्ञानिनः स्थितिः ॥१६७॥

क्रमेण वर्णिता तेऽग्रे ह्यात्मज्ञस्याऽपि चात्मनः ।
आत्मज्ञानविहीनस्य जनस्यापि गतिर्मया ॥१६८॥

गतिं नानात्वदर्शीणां ब्रह्मदृष्टेः क्रमं तथा ।
भ्रमं निवारयन् सर्वं तवाग्रेऽहमवर्णयम् ॥१६९॥

आत्मस्वरूपेण सह स्थितिरात्मविदामपि ।
सन्यासाश्रमचर्चाऽपि तवाग्रे विहिता मया ॥१७०॥

श्रवणाद् गुरुवाक्यानि ब्रह्मज्ञानं कृते सति ।
[10]शास्त्राऽभ्यासो न कर्तव्यो वाचो विग्लापयन्त्यतः ॥१७१॥

अष्टावक्रेण मुनिना जनकेऽपि च राजनि ।
यदासीदुपदिष्टं तद् वक्ष्यामीह तवाग्रतः ॥१७२॥

[11]पठितं वा श्रुतं राजन् ! त्वया शास्त्रं विभिन्नकम् ।
ऋते विस्मरणात् पूर्वं तत् सर्वं नैव मुच्यते ॥१७३॥

---

१०. तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नाऽनुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥ – बृ.४।४।२१

११. आचक्ष्व शृणु वा तात ! नानाशास्त्राण्यनेकशः ।
तथापि न तव स्वास्थ्यं सर्वं विस्मरणादृते ॥ – अष्टावक्रगीता १६।१

तवोपदेशका राजन् ! ब्रह्मविष्णुमहेश्वराः ।
[१२]ऋते विस्मरणात् ताँश्च मुक्तिस्ते न भविष्यति ॥१७४॥

संश्रुते तु महावाक्ये कृते मननचिन्तने ।
राजानं ज्ञानमायातं ब्रह्मबोधस्वरूपकम् ॥१७५॥

श्रुते भागवते शास्त्रे [१३]परीक्षिद् भूपतिः शुकम् ।
अब्रवीद् विनतो भूत्वा 'ब्रह्म ज्ञातं' गुरो ! मया ॥१७६॥

जनकः कृतकृत्योऽभूदन्त्ये विनयपूर्वकम् ।
समर्पयत् स गुरवे स्वात्मानं राज्यपूर्वकम् ॥१७७॥

शिष्यः –
अथापि मम जिज्ञासा भवत्सरणिमागतः ।
शुश्रूषाऽस्ति भवत्साकं वसामीह समुत्सुकः ॥१७८॥

गुरुः –
ब्रह्मज्ञस्य महत्ताया महावाक्यविशेषता ।
कैवल्यमुक्तेरपि च चर्चा सारांशतः कृता ॥१७९॥

इतोऽपि शेषा जिज्ञासा सुस्पष्टं वद सौम्य हे !
यथाशक्ति प्रवक्ष्यामि सावधानमना शृणु ॥१८०॥

---

१२. हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
तथापि न तव स्वास्थ्यं सर्वं विस्मरणादृते ॥ – अष्टावक्रगीता १६।११

१३. भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥ – श्रीमद्भागवतम् १२।६।५

शिष्यः –

अनुभूतिकरं वाक्य'महं ब्रह्माऽस्मि' शब्दितम्[१४] ।
बृहदारण्यके प्रोक्तं प्रथमाध्यायवर्णितम् ॥१८१॥

उपदेश्यं महावाक्यं चतुर्थाध्यायवर्णितम् ।
'अभयं वै जनक त्वं प्राप्तोऽसी'तीह सुन्दरम् ॥१८२॥

महावाक्यमिदं ब्रह्मन् ! यदा मे कर्णगोचरम् ।
बृहदारण्यके प्राप्तमनुभूत्यात्मकं क्रमात् ॥१८३॥

विषयेऽस्मिन् महाभाग ! जिज्ञासा मम वर्द्धिता ।
आज्ञापयतु सुष्पष्टं योग्यं मां यदि मन्यते ॥१८४॥

गुरुः –

प्रश्नोऽयमतिरम्योऽस्ति धन्यं त्वां प्रवदाम्यतः ।
पूर्वाऽपरं विचार्यैव प्रश्नमुत्तरयाम्यहम् ॥१८५॥

मीमांसाविषये न्यायः सुन्दरोऽस्त्यत्र लभ्यते ।
पाठस्य क्रमतोऽप्यत्राऽर्थक्रमो बलवत्तरः ॥१८६॥

'अग्निहोत्रं जुहोती'ति प्रथमं वदति श्रुतिः ।
यवागूं पचतीत्येतद् वाक्यं पश्चादुदीरयत् ॥१८७॥

यद् द्रव्यं हवनीयं स्याद् यवागूर्यज्ञकर्मणि ।
अपक्वे सति तद् द्रव्ये स यज्ञो भविता कथम् ॥१८८॥

---

१४. ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् – अहं ब्रह्मास्मि ।
– बृहदारण्यकोपनिषद् १।४।१०

मीमांसाऽसूत्रयच्चात्र 'श्रुतिलिङ्गादिषु क्रमे ।'[१५]
अर्थक्रमोऽस्ति बलवान् जहीहि मनसो भ्रमम् ॥१८९॥

उक्त न्यायोऽत्र घटते यत्र वाक्यक्रमो भवेत् ।
अपि पाठक्रमादत्राऽर्थक्रमो बलवत्तरः ॥१९०॥

महावाक्यानि तान्यस्माद् यत्र कुत्राऽऽगतान्यपि ।
सूत्रार्थं प्रविचार्यात्राऽर्थक्रमो बलवान् भवेत् ॥१९१॥

## पञ्चाग्निविद्या

शिष्यः –
अहं संश्रुतवानद्य भूमाविद्यां गुरोरिह ।
इतः पञ्चाग्निविद्यां च शुश्रूषा तत्त्वतो मम ॥१९२॥

प्रथमं गुरुणा प्रोक्तं – वक्ष्याम्येनां प्रसङ्गतः ।
आज्ञापयतु हे ब्रह्मन्नग्निविद्यां स्वसारतः ॥१९३॥

गुरुः –
सोऽयं श्रौत प्रसङ्गोऽस्ति प्राचीनोऽतीव वैदिकः ।
अधुनाऽहं तमेवाऽत्र वक्ष्याम्यत्यन्तमार्मिकम् ॥१९४॥

गृहस्थाश्रममातिष्ठन् श्वेतकेतुर्गृहाङ्गणे ।
पठितुं गतवान् सोऽयं स्वपितुः सन्निधिं क्रमात् ॥१९५॥

पितापुत्रौ समावास्तां तयोर्वार्ताऽभवत् क्रमात् ।
प्रत्यक्षं शृणु हे तात ! तद्वार्तां तन्मुखादिह ॥१९६॥

---

१५. श्रुतिलिङ्गवाक्यप्रकणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।
– मीमांसासूत्रम् ३।३।१४

श्वेतकेतुः –
पितः पञ्चाग्निविद्या का ? ज्ञातव्या साऽभवत् कथम् ?
आज्ञापयतु हे ब्रह्मन् ? नैव जानामि तामहम् ॥१९७॥

उद्दालकः –
या ज्ञाताऽऽसीन्मया प्रोक्ता पुत्र ! त्वां सकलाऽधुना ।
पञ्चाग्निविद्या तु मया पठिता न वदानि किम् ? ॥१९८॥

श्वेतकेतुः –
जानाति क इमां विद्यां कुत्र गत्वा पठान्यहम् ।
आज्ञापयतु हे ब्रह्मन् ! पठेयमधुना कथम् ? ॥१९९॥

उद्दालकः –
वत्स ! त्वमधुना गच्छ पाञ्चालं प्रति संयमी ।
प्रवाहणसमीपं तां विद्यामारेभिषे ततः ॥२००॥

गुरुः –
अध्येतुं गतवान् श्वेतकेतुः प्रवाहणाश्रमे ।
परीक्षायामयोग्योऽभूत् ततः श्वेतो विनिर्गतः ॥२०१॥

श्वेतकेतुः खिन्नमनाऽभवत् प्रत्याययौ गृहम् ।
उद्दालकं स्वपितरं वृत्तान्तमभणत् समम् ॥२०२॥

स्वयमुद्दालकः प्रास्तौद् गुरोः प्रवाहणाश्रमम् ।
गुरूपसत्तिं कुर्वन् स सूनृतां वाचमब्रवीत् ॥२०३॥

उद्दालकः –
विद्वन् ! पञ्चाग्निविद्याया महिमानमिहोच्यताम् ।
अनन्तरं क्रमादेव जिज्ञासां मम शाम्यताम् ॥२०४॥

उद्दालकोऽपृच्छदग्रे गुरुं प्रवाहणं प्रति ।
पञ्चाग्निविद्याविषये ज्ञातुं शान्तमना स्वयम् ॥२०५॥

प्रवाहणः –
ब्रह्मँस्त्वां स्वागतं कुर्वे जिज्ञासा या कृताऽधुना ।
यथामति प्रवक्ष्यामि स्थीयतां सुस्थिरंमना ॥२०६॥

इमां पञ्चाग्निविद्यां यः सर्वां सद्गुरुवक्त्रतः ।
महावाक्यैः संश्रृणोति श्रुत्वा मुञ्चति संयमी ॥२०७॥

उद्दालकः –
यदि साक्षान्महावाक्यं मुक्तिहेतुर्भवेद् गुरो !
आज्ञापयतु पञ्चाग्निविद्यायाः किं प्रयोजनम् ? ॥२०८॥

प्रवाहणः –
त्रिभ्य एवाऽऽश्रमिभ्यस्तु महावाक्यं सहेतुकम् ।
गृहाश्रमाणां पञ्चाग्निविद्याप्यायाति हेतुताम् ॥२०९॥

गृहाश्रमिभिरुभयं श्रोतव्यमनिवार्यतः ।
अन्यथा मुक्तिमार्गो न दृश्यते, विद्धि सर्वथा ॥२१०॥

'तद् य इत्थं विदु'र्मन्त्रं छान्दोग्ये सौम्य ! संश्रुतम् ।
पठनात् तमिमां विद्यां तन्महत्त्वं च बुध्यते ॥२११॥

प्रत्यायान्ति यदा जीवा भुक्त्वा कर्मफलान्यहो !
सुहुतास्ते तु पञ्चाग्नौ जायन्ते पुनरागताः ॥२१२॥

स्मृत्वा भुक्तानि कष्टानि जीवा दुःखसमाकुलाः ।
वैराग्यं बोधमानास्ते स्युर्मुक्तिपथमाश्रिताः ॥२१३॥

उद्दालकः –
एषाऽनिवार्या विद्या चेद् गृहस्थाश्रमिणां कृते ।
सुष्पष्टमाज्ञापयतु विद्वन् ! मां कृपयाऽधुना ॥२१४॥
प्रवाहणः –
गृहस्थानां भवन्त्येते रागद्वेषौ प्रियाऽप्रियौ ।
शत्रुमित्रे च वर्द्धन्ते कामक्रोधादयोऽगुणाः ॥२१५॥

धर्माऽधर्मादिसंस्कारा वर्द्धन्ते वासना अपि ।
अज्ञानजन्याः सर्वे ते तेषु जीवाः पतन्त्यहो ! ॥२१६॥

एतेभ्यः पारमागन्तुं विरक्तोऽर्हति नाऽन्यथा ।
अत एव गृहस्थानां श्रव्या विद्या यथार्थतः ॥२१७॥

पञ्चाग्निषु यः प्रथम आदित्यं वर्णयामि तम् ।
अतिसंक्षेपतो वच्मि गौतम ! श्रूयतां समम् ॥२१८॥
गुरुः –
शास्त्रानुसारः संवादो द्वयोरेवमभूदतः ।
लम्बकोऽस्ति स संवादः पाठ्यो ग्रन्थानुसारतः ॥२१९॥

प्रवाहणः पुरा श्वेतकेतुं यत् पृष्टवान् हि तत् ।
पुनश्चारुणिना साकं तदपृच्छत् प्रवाहणः ॥२२०॥

प्रश्नेषु तेषु पृष्टेषु प्रश्नाः पञ्चाऽभवन्निमे ।
मृते सति जना यान्ति कस्मिन् मार्गानुसारिणः ॥२२१॥

ते जनाः पुनरायान्ति लोकेऽस्मिन् विनिवर्त्य किम् ?
मृतेषु तेषु बहुषु लोकमेष्यन्ति किं पुनः ? ॥२२२॥

दत्वा कत्याहुतीर्ब्रह्मन् ! मीयते पुरुषार्थकम् ।
देवयानेन सह किं पितृयानं विचिन्त्यते ॥२२३॥

इत्याद्यनेकप्रश्नांश्च स्थापयित्वा तदुत्तरम् ।
अददात् प्रश्नकर्ताऽपि ब्रह्मज्ञं समबोधयत् ॥२२४॥

प्रश्नश्चतुर्थो मुख्योऽस्ति प्रश्ना अन्ये सहायकाः ।
वर्णनं प्रथमं त्वस्य संभवेत् फलदायकम् ॥२२५॥

पञ्चाग्निषु तत् प्रथममादित्याग्नेश्च वर्णनम् ।
आदित्यः समिधा रश्मिर्धूमोऽर्चिस्तु दिनान्यहो ! ॥२२६॥

दिशोऽङ्गारा विस्फुलिङ्गाः स्युर्दिशोऽवान्तरा अपि ।
श्रद्धाग्निषु जुह्वति ते देवा हव्यं निरन्तरम् ॥२२७॥

तयाऽऽहुत्या हि प्रथमः सोमो राजा भवत्यहो ।
पञ्चाग्निषु द्युलोकाग्निः सूक्ष्मरूपेण वर्णितः ॥२२८॥

पर्जन्याग्निर्द्वितयोऽस्ति मेघ एवाऽग्निरुच्यते ।
संवत्सरः समिद् धूमा मेघपुष्पाणि भान्त्यहो ! ॥२२९॥

तडिज्ज्वाला भवत्येवाऽऽङ्गारो वज्रायते तदा ।
गर्जनं विस्फुलिङ्गेव सोमो हव्यायते सदा ॥२३०॥

हविर्जुह्वति देवास्तु सोमो राजा गिलत्विति ।
वर्षन्त्याहुतयो भूत्वा मेघपुष्पाणि भूतले ॥२३१॥

जीवात्मानोऽनुशयिनो प्रपतन्तीह तैः सह ।
एतावद् वर्णितं विप्र ! पर्जन्याग्निं तवाग्रतः ॥२३२॥

अतोऽहं तृतयाऽग्नेश्च वर्णनं कर्तुमारभे ।
पृथिव्याग्नेश्च संक्षेपाद् वर्णयामि शृणोतु तत् ॥२३३॥

पृथिव्यग्निस्तृतीयोऽस्ति समित् संवत्सरोऽस्ति हि ।
आकाशमेव धूमोऽस्ति रात्रिर्ज्वाला समीहिता ॥२३४॥

अङ्गारका दिशः प्रोक्ता विदिशो विस्फुलिङ्गकाः ।
हव्यं द्रव्यं पृथिव्याग्नौ देवा जुह्वति सन्ततम् ॥२३५॥

तदाहुत्या च पर्जन्यः पृथिव्यामभिवर्षति ।
फलन्त्यन्नानि पर्जन्याज्जीवात्मा जायते ततः ॥२३६॥

प्रवाहणोऽपि ब्रह्मज्ञः पृथिव्यग्निं विनिर्दिशन् ।
पुरुषाग्नेरितिवृत्तं सर्वमचकथद् बुधः ॥२३७॥

पुरुषोऽस्ति चतुर्थोऽग्निस्तद्वाक्यं समिधस्त्यहो !
प्राणा धूमास्तद्रसना ज्वालाऽङ्गाराणि चक्षुषी ॥२३८॥

विस्फुलिङ्गास्तु सुश्रोत्रे चैतस्मिन् पुरुषाग्निषु ।
देवता हविरन्नानि मुखकुण्डेषु जुह्वति ॥२३९॥

पुरुषाग्नौ पाचितेऽन्ने वीर्यमुत्पद्यते शनैः ।
स्त्रीरूपाग्नौ सुसम्बन्धे पुमान् वीर्यं जुहोत्यपि ॥२४०॥

पञ्चमाग्निस्तु योषाऽस्ति तदुपस्थं समिन्धनम् ।
पत्युः सुमन्त्रणं धूमा ज्वाला योनिः समुच्चला ॥२४१॥

एकीभूतौ स्त्रीपुमांसौ भावयन्तौ परस्परम् ।
पुमानुत्तेजितं लिङ्गं योषायोनौ विशत्यतः ॥२४२॥

स्त्रीरूपाग्नौ वीर्यहव्यं प्रेम्णा जुह्वति देवताः ।
जीवात्मा जायते तत्र स्त्रीगर्भाच्छिशुरूपकः ॥२४३॥

शिष्यः –
प्रथमं यद् द्युलोकाग्नौ हुता श्रद्धा गुरो ! मयि ।
श्रद्धाया अर्थशुश्रूषा समायाताऽस्ति मानसे ॥२४४॥

गुरुः –

श्रद्धा तु जलमस्त्येतद् द्युलोकाग्नौ हि देवताः ।
प्रथमाहुतिरूपं तत् स्वाहा कृत्वाऽर्पयन्ति ताः ॥२४५॥

पश्चात् तु पञ्चमाऽऽहुतेर्जलं पुरुषरूपकम् ।
तत्रोल्वेनाऽऽवृतो गर्भे कललत्वेन तिष्ठति ॥२४६॥

नवमासान्तरे गर्भो वर्द्धितो मातृगर्भतः ।
जायते जन्तुरूपेण भोक्तुं प्रारब्धकर्म सः ॥२४७॥

प्रारब्धाल्लभते जातिमायुर्भोगाँस्तथैव च ।
सहाऽऽयातं स भुङ्क्तेऽत्र प्रयातः पुनरेति च ॥२४८॥

अन्त्ये तद्बान्धवा नीत्वा चिताऽग्नौ जुह्वति शवम् ।
यत्रतो ह्यागतो जीवः पुनस्तत्रैव गच्छति ॥२४९॥

शिष्यः –

प्रवाहणेनोपदिष्टामग्निविद्यामिहाऽऽरुणिम् ।
श्रुत्वा गुरो ! मनो मेऽत्र सुप्रसन्नमभूदति ॥२५०॥

विषयेऽस्मिन् महाभाग ! जिज्ञासा मम वर्द्धिता ।
गृहस्थानां कृते सैषा विद्या प्रादुरभूत् कथम् ? ॥२५१॥

अन्येषामाश्रमाणां सा विद्याऽनावश्यकी कथम् ।
विभेदो दृश्यतेऽत्रैव गुरो ! मामनुदिश्यताम् ॥२५२॥

गुरुः –

जिज्ञासाऽतीव रम्याऽस्ति हर्षितं मे मनोऽभवत् ।
पुनर्व्याख्यामि चैतत् त्वं सावधानमनाः शृणु ॥२५३॥

बृहदारण्यके चात्र छान्दोग्येऽपि समागता ।
अग्निविद्या सृष्टिविद्याऽधीष्व त्वं स्वयमेव हि ॥२५४॥

तत्र शाङ्करभाष्यं च पठितुं शक्यते समम् ।
चिन्तनं मननाभ्यासौ स्वाध्यायेनाऽभिवर्धताम् ॥२५५॥

यो जीवोऽनुशयी चाऽस्ति स आयाति स्वकर्मभिः ।
पञ्चाग्निषु हुतो भूत्वा जन्म कष्टेन लभ्यते ॥२५६॥

स्वमातृरजसा साकं पितृवीर्येण संयुतः ।
भ्रूणो भूत्वा स कष्टेन मातृगर्भे प्रतिष्ठते ॥२५७॥

उल्वेन वेष्टितो भ्रूणोऽशुचौ गर्भे वसत्यपि ।
स्वयं संकुचितो भूत्वा निश्चेष्टो मूर्च्छितो भवेत् ॥२५८॥

बुद्धिः शक्तिर्विवेकाद्या रुद्धा तस्य भवन्त्यहो !
शेते च मलमूत्रादौ मातृगर्भेऽतिकष्टभाक् ॥२५९॥

एवं दुःखप्रदे गर्भे यानं मे मास्म भूत् पुनः ।
इत्येवं लपमानाय विरागमभिवर्द्धितुम् ॥२६०॥

गृहस्थानां कृते सैषा विद्या प्रादुरभूत् श्रुतिः ।
एनां विद्यामुपासीत सद्गुरोर्मुखतः शृणु ॥२६१॥

शिष्यः –
विहाय चाऽन्याऽऽश्रमिणो गृहस्थानां कृते किमु ?
पक्षपातः कृतः श्रुत्या विधानं हीदृशं किमु ? ॥२६२॥

गुरुः –
अस्योत्तरमदां पूर्वं सङ्क्षेपेणैव तत्पुनः ।
प्रवक्ष्यामीह सङ्क्षेपात् सावधानतया शृणु ॥२६३॥

काम्यं कर्मैषणायुक्तं प्रकरोति गृहाश्रमी ।
पुत्रदाराधनासक्तः प्रपञ्चे रमते गृही ॥२६४॥

रागद्वेषादिभिः सार्धं धर्माऽधर्मादिकर्मकृत् ।
अन्तःकरणभाण्डं स्वं भरतीह शुभाऽशुभैः ॥२६५॥

हिंसाऽनृतं च कापट्यमसूया लोभमत्सरौ ।
गृहस्थेषु भवन्तीह दुर्गुणा लघवोऽधिकाः ॥२६६॥

वैराग्यं त्वल्पमात्रं स्याद् गृहस्थजनमानसे ।
वैराग्यार्थमिमां विद्यां श्रद्धाविश्वासतः शृणु ॥२६७॥

विद्यामिमां संशृणोतु महावाक्यैर्भवानपि ।
अन्यथा न भवेन्मुक्तिर्गृहस्थानां तु का कथा ॥२६८॥

**देवयानं पितृयानञ्च**

शिष्यः –
प्रश्नस्याऽस्य चतुर्थस्य ब्रह्मन् ! संक्षिप्तमुत्तरम् ।
आगतं मम शुश्रूषाऽन्यप्रश्नोत्तरमीहते ॥२६९॥
गुरुः –
क्व गच्छन्ति नरा मृत्वा ? प्रश्नोऽयं प्रथमोऽस्ति ते ।
यान्ति यत्र नरा मृत्वा मार्गो निर्दिश्यते शृणु ॥२७०॥

देवयानं धूमयानं दृष्टं मार्गद्वयं मया ।
तयोः संक्षिप्तरूपेण करिष्ये वर्णनं शृणु ॥२७१॥

पञ्चाग्निविद्यां जानन्ति ये गृहस्थाः समुच्चयीः ।
अन्तरालस्थितास्ते हि गच्छन्ति अर्चिरादितः ॥२७२॥

शिष्यः –

बोद्धुमस्तीह कठिनं को मार्गोऽस्त्यर्चिरादिकः ।
आज्ञापयतु सारल्यात् कृतकृत्यो भवाम्यहम् ॥२७३॥

गुरुः –

कैवल्यमुक्तौ नैवास्ति पुनरागमनादिकम् ।
ब्रह्मैव सन् पुनर्ब्रह्मभूतस्यागमनं कथम् ॥२७४॥

ज्ञानकर्मणि ये सन्ति कार्यब्रह्म ह्युपासकाः ।
लोकं तस्यैव गच्छन्ति भुङ्क्ते भोगञ्च तत्र हि ॥२७५॥

हिरण्यगर्भलोकेऽस्मिन् भुक्त्वैश्वर्यं यथेच्छतः ।
उपासका निवर्तन्ते पुनः संसारवर्त्मनि ॥२७६॥

गुरुः –

वर्णयामीह संक्षेपाद् धूमयानस्य वर्णनम् ।
सकामकर्मकर्तारो भवन्ति पथिकाः शृणु ॥२७७॥

प्रश्नस्य तृतयस्यापि समाधत्ते प्रवाहणः ।
प्रश्नस्य द्वितयस्यापि चोत्तरं कुरुते शृणु ॥२७८॥

गृहस्थाः कुर्वते काम्यमिष्टापूर्तादिकर्म यत् ।
तेन ते धूमयानेन मृत्योः पश्चात् प्रयान्ति च ॥२७९॥

गत्वा चन्द्रमसो लोके चन्द्रायन्ते गता जनाः ।
सोमः सैषश्चन्द्रमाऽस्ति अन्नं भक्षन्ति देवताः ॥२८०॥

प्रश्नस्य द्वितयस्यापि चोत्तरं प्रददात्यतः ।
भुक्त्वा कर्मफलं यावत् तावज्जीवो निवर्तते ॥२८१॥

प्रयातो येन मार्गेण जीवात्माऽऽयाति तेन हि ।
पुनः सञ्चितकर्माणि भोक्तुमायाति भूतले ॥२८२॥

स एवाऽनुशयी जीवः कृत्वा कर्माणि यात्यहो !
जायते म्रियते नित्यं कुरुते स गमागमौ ॥२८३॥

अविद्यावशगो जीवो घटीयन्त्रमिव भ्रमन् ।
काम्यकर्माणि कुरुते पुनरायाति याति च ॥२८४॥

जीवो गमागमौ कुर्वन्नविद्याकामकर्मणः ।
फलभोक्ताऽनन्तकालं घटीयन्त्रमिव भ्रमन् ॥२८५॥

शिष्यः –

दुश्चक्रं तादृशं भित्वा जीवात्मा न कदाप्यहो !
भवेन्नैव समुत्तीर्णः ? शुश्रूषाऽस्ति ममाऽधुना ॥२८६॥

गुरुः –

श्रुत्युक्तं यदहं वेद्मि तमनूद्य वदामि यत् ।
सारांशं त्वामहं वच्मि सावधानमना शृणु ॥२८७॥

ये वै सन्ति सुशीला रमणीयाचरणा लोके ।
ते तूत्तमयोनौ ब्रह्मक्षत्रविशां प्रजायन्ते ॥२८८॥

अत्रापि ये कुशीलाः कपूयाचरणाः सन्ति ।
ते चण्डालसूकरशूनामशुभयोनौ प्रजायन्ते ॥२८९॥

शनैः शनैः शुभं कर्म कृत्वा ते शुभयोनिषु ।
प्रजायन्ते धूममार्गं हित्वा मुक्तिं प्रयान्त्यपि ॥२९०॥

शिष्यः –

प्रश्नस्य तृतयस्यापि किमुत्तरमदात् प्रभो !
तदपि श्रोतुमिच्छामि सारांशो मय्यनूद्यताम् ॥२९१॥

गुरुः –

येषां मार्गद्वयौ रुद्धावज्ञानात् पापकर्मणः ।
जायन्ते च म्रियन्ते च पुनः पुनरिहैव ते ॥२९२॥

ते क्षुद्रजन्तवः सन्ति पशुपक्षिमृगादयः ।
कीटा भृङ्गाः पतङ्गाश्च मक्षिका दंशमूषकाः ॥२९३॥

तेषां पञ्चजनाः सन्ति पञ्च पातकिनोऽपि च ।
स्तेनः सुवर्णचौरोऽपि सुरापी गुरुतल्पगः ॥२९४॥

ब्रह्महाऽपि च तैरेव चक्रवद् भ्रमतीत्यहो !
एतेषां परलोकेऽपि रिक्तं स्थानं न दृश्यते ॥२९५॥

ये जानन्तीह पञ्चाग्निविद्यां श्रुत्वा यथार्थतः ।
न महान्तीह पापानि पञ्च तेषां लगन्त्यपि ॥२९६॥

शान्तिपाठः

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥

॥ इति बृहदारण्यकोपनिषत्कारिका ॥

# अनुवादककृत उपसंहारः

श्रूयते यद् रामनामजपान्मुक्तिर्मिलेदितः ।
सारल्येनैव घटते महावाक्यार्थमेव तत् ॥१॥

'रा'पदं 'तत्'पदार्थं हि 'मः'पदं 'त्वं'पदार्थवत् ।
'असि' क्रियायां चैतन्यमेकीभूतं द्वयोरिह ॥२॥

मोक्षमात्यन्तिकं लब्धुं रामनाम्नो जपादपि ।
शक्यते सहजेनैव चित्तवृत्तिनिरोधतः ॥३॥

'मोहक्षयो' भवति यत्र यदा तदैव
'मोक्षो' भवेद् बुधजनस्य परस्य चापि ।
नो चेत् तदा नहि भवेत् पठितस्य साधो–
रन्यस्य वापि गतिरन्यतरा सदैव ॥४॥

अज्ञानाद् विस्मृतेर्भ्रान्त्या प्रमादाद् वाऽप्यशुद्धयः ।
सम्भवन्तीह सुधियः कारुण्यात् सूचयन्तु माम् ॥५॥

नाहं संस्कृतशास्त्रज्ञः क्व वेदान्तः सुदुस्तरः ।
नाहं कविः कवित्वेऽपि कुशलो नैव सक्षमः ॥६॥

न हि विद्याऽभिमानेन संस्कृते लिखिता मया ।
अनुकूलयितुं वाणीं कवित्वे यत्नवानहम् ॥७॥

स्मरणात् कीर्तनात् पाठात् प्रश्नात् पत्रादिलेखनात् ।
अभ्यासाऽऽचरणाद् भूयादनुकूला सरस्वती ॥८॥

नैव सन्त्युपमोत्प्रेक्षासूक्तयो हृदयङ्गमाः ।
अनुप्रासादयश्चार्थालङ्कारा गुणवृत्तयः ॥९॥

ये मण्डयन्ति शतशः काव्यं चेतो हरन्ति च ।
वाचने श्रवणेऽपीह मधुधारा वहन्त्यपि ॥१०॥

न क्वाऽपि तत्पुरुषोऽव्ययीभावः कृतो न हि ।
बहुब्रीहिः कथं भूयाद् द्वन्द्वोऽपीह कुतो भवेत् ॥११॥

केवलं मानसोत्साहात् क्रियते कर्मधारणम् ।
विना येन कथं जीवो जीवतीह निरन्तरम् ॥१२॥

प्रीयास्तां मे हरिहरौ कारिकाः पठनादिमाः ।
ब्रह्माऽऽनन्देन सुस्नातान् पातां शुद्धान् शरीरिणः ॥१३॥

वेधाहरिहरौ पान्तु करुणां मयि कुर्वताम् ।
आधीन् व्याधीन् हरन्तां ते भवन्तु शरणं मम ॥१४॥

देवीप्रसादतनयो बुधभीमकान्त–
स्तस्यात्मजेन कवितारुचिमानसेन ।
नित्यं बुधैरभिहितेन जनेन लक्ष्मी–
कान्तेन मुग्धहृदयेन कृतोऽनुवादः ॥१५॥

कविर्मनीषी विदुषां वरेण्यः
शरत्कुमारोऽस्ति बुधाग्रगण्यः ।
वेदान्तवेत्ता व्यवहारविज्ञो
धर्मानुगोऽपीह जगद्विधिज्ञः ॥१६॥

वेदान्तविद्याविषयेऽधिलग्नः
कविर्मनीषी गुणवान् मनोज्ञः ।
शरत्कुमारो विबुधोऽतियत्नाद्
याः कारिका निर्मितवान् सुयोगात् ॥१७॥

वेदान्तविद्यामधिगम्य तासां
सुस्पष्टभाषाविहितोऽनुवादः ।
वेदान्तविद्यारुचिमानसानां
तत्पाठकानां मुदमातनोतु ॥१८॥

हरिरेव गतिर्हरिमेव भजे
हरिणाऽधिकृतोऽस्मि नमो हरये ।
करुणाऽस्तु हरेः सकलं नु हरे–
रहमस्मि हरौ शिवमस्तु हरे ! ॥१९॥

॥ ॐ तत् सत् ॥

## ‘जयतु संस्कृतम्’संस्थातः प्रकाशिता ग्रन्थाः

| | | | |
|---|---|---|---|
| १. | मङ्गलग्रह | २०५६ | प्रा.डा. टीकाराम पन्थी |
| २. | कृष्णाभिसर्पणम् | २०५६ | महाकवि भरतराज मन्थलीय |
| ३. | मीमांसातर्कभाषा | २०५६ | डा. काशीनाथ न्यौपाने |
| ४. | चन्द्रप्रभा | २०६८ | प्रा. डा. टीकाराम अधिकारी |
| ५. | संस्कृतकवितासङ्ग्रह (भाग १) | | संयुक्त सम्पादन |
| ६. | कलमाक्षरचरितकाव्यम् | | प्रा. तेजकेशरी शर्मा |
| ७. | संस्कृतमा के छ ? | | संयुक्तलेखन |
| ८. | जयतु संस्कृतम् १ (अनुसन्धानपत्रिका) | | संयुक्त सम्पादन |
| ९. | प्राकृतपोखरा (नेपालीबाट संस्कृतमा) | | अनु. प्रा.डा. लक्ष्मीकान्तपन्थी |
| १०. | ब्रह्मसूत्र (ने. अनुवाद र प्रकाशन) | २०६८ | अनु. प्रा. डा. दीर्घराज घिमिरे |
| ११. | गौतमन्यायसूत्र (ने.अनुवाद ) | २०६८ | अनु. प्रा. पद्मप्रसाद भट्टराई |
| १२. | लङ्कावतारसूत्र (नेपाली अनुवाद) | २०६८ | अनु. डा. काशीनाथ न्यौपाने |
| १३. | चार्वाक दर्शन (सङ्कलन, सम्पा. ने.अनु.) | २०६८ | प्रा. रेवतीरमण खनाल |
| १४. | जयतु संस्कृतम् अङ्क २ (अनुसन्धानपत्रिका) | २०६८ | संयुक्त सम्पादन |
| १५. | संस्कृतकवितासङ्ग्रह (भाग २) | २०६८ | संयुक्त सम्पादन |
| १६. | कामकलाविलासः (ने.अनुवाद) | | प्रा.विद्यानाथ उपाध्याय |
| १७. | तत्त्वार्थसूत्रम् (जैनदर्शन,ने.अनुवाद) | २०७३ | प्रा.डा. चन्द्रमणि नेपाल |
| १८. | दर्शनसारामृतम् (मौलिक) | २०७५ | पं. लोकनाथ लुइँटेल |
| १९. | मीमांसापरिभाषा (ने.अनुवाद) | २०७६ | प्रा.डा. ऋषिराम पोखेल |
| २०. | समीक्षात्मकग्रन्थ (समीक्षा) | २०७६ | सहप्रा. ध्रुव भट्टराई |
| २१. | श्रीब्रह्माण्डपुराण (ने.अनुवाद) | २०७८ | डा. बद्री पोखेल |

# श्रीराजर्षिजनकस्मृतिकोषतः प्रकाशिता ग्रन्थाः

| | ग्रन्थको नाम | लेखकको नाम | प्रकाशन मिति |
|---|---|---|---|
| १. | ब्रह्मजिज्ञासा | प्रा. शिवगोपाल रिसाल | २०५७ साल |
| २. | पशुपतिको सेरोफेरो | प्रा. शिवगोपाल रिसाल | २०५९ साल |
| ३. | वेदस्तुति | डा. स्वामी रामानन्द गिरि | २०६१ साल |
| ४. | ज्ञान र भक्ति | शरत्कुमार भट्टराई | २०६३ साल |
| ५. | रासपञ्चाध्यायी | शरत्कुमार भट्टराई | २०६४ साल |
| ६. | सन्तमहिमा | प्रा. शिवगोपाल रिसाल | २०६५ साल |
| ७. | ब्रह्मसाक्षात्कार | शरत्कुमार भट्टराई | २०६५ साल |
| ८. | उपनिषत्सार | शरत्कुमार भट्टराई | २०६७ साल |
| ९. | ब्रह्मसूत्रसार | शरत्कुमार भट्टराई | २०६७ साल |
| १०. | अद्वैतसिद्धि (१) | शरत्कुमार भट्टराई | २०६९ साल |
| ११. | परमसत्य | शरत्कुमार भट्टराई | २०६९ साल |
| १२. | श्रीकृष्णाय वयन्नुमः | शरत्कुमार भट्टराई | २०६९ साल |
| १३. | अध्यास | शरत्कुमार भट्टराई | २०६९ साल |
| १४. | अद्वैतसिद्धि (२) | शरत्कुमार भट्टराई | २०७० साल |
| १५. | अन्तिम उपदेश | शरत्कुमार भट्टराई | २०७० साल |
| १६. | ब्रह्मविद्या | शरत्कुमार भट्टराई | २०७१ साल |
| १७. | पराविद्या | शरत्कुमार भट्टराई | २०७१ साल |
| १८. | अजातवाद | शरत्कुमार भट्टराई | २०७१ साल |
| १९. | औपनिषद पुरुष | शरत्कुमार भट्टराई | २०७२ साल |
| २०. | अपरोक्षाऽनुभूति | शरत्कुमार भट्टराई | २०७२ साल |
| २१. | द्रष्टा र दृश्य | शरत्कुमार भट्टराई | २०७२ साल |
| २२. | श्रीमद्भागवतको अवतरणिका | शरत्कुमार भट्टराई | २०७४ साल |
| २३. | अष्टावक्रगीता | शरत्कुमार भट्टराई | २०७५ साल |
| २४. | अवधूतगीता | शरत्कुमार भट्टराई | २०७५ साल |
| २५. | ऋते ज्ञानान्न मुक्तिः | शरत्कुमार भट्टराई | २०७५ साल |
| २६. | सङ्क्षेपशारीरकसारः | शरत्कुमार भट्टराई | २०७५ साल |
| २७. | उपनिषत्कारिका | शरत्कुमार भट्टराई | २०७८ साल |
| २८. | ब्रह्मसूत्रकारिका | शरत्कुमार भट्टराई | २०७८ साल |
| २९. | उपनिषत्कारका संस्कृत भाषायाम् | शरत्कुमार भट्टराई | २०७८ साल |

9789937113816